Thanjavur Sarasvati Mahal Series - No. 290.

# INDUMATI PARINAYAM

BY

SHIVAJI MAHARAJA
(1832 – 1855 A. D.)




SARASVATI MAHAL LIBRARY,
THANJAVUR.

1989 ] ** [ Price: Rs. 8-00

Thanjavur Sarasvati Mahal Series - No. 290.

# INDUMATI PARINAYAM

BY

SHIVAJI MAHARAJA

(1832 – 1855 A. D.)



*Edited by*

Prof. V. Gopala Ayyangar, M. A.,

( Retd. Curator, Sarasvati Mahal Library )




*Published by*

SARASVATI MAHAL LIBRARY,

THANJAVUR.

1989 ] ** [ Price : Rs. 8-00



# முன்னுரை

இந்திய இதிகாசங்களுள் ஒன்றான ஸ்ரீமத் ராமாயணத்தின் கதாநாயகன் ஸ்ரீராமன். புகழ்பெற்ற ரவிகுலத்தில் தோன்றியவன். இக்குலத்தினரை 'ரகு குலத்தினர்' என்றும் கூறுவர். இக்குலத்தில் பிறந்தவர்களை 'ரகுவீரன்' 'ரகுகுலத் திலகன்' என்றாலும் இப்பெருமை முழுதும் ராமனையே சாரும். அத்தகைய குலத்திற்குப் பெருமை தேடித்தந்தவன் ஸ்ரீராமன். ரகுவிற்குப்பின் ராமனே மிகவும் புகழ் பெற்றான்.

இத்தகைய ரவிகுலத்தில் தோன்றிய ரகு மகாராசனின் ஆட்சிக்குப்பின் 'ரவிகுலம்' 'ரகுகுல'மாகவும் அழைக்கப்பெறலாயிற்று. இத்தகு சிறப்புமிகு மன்னன் 'ரகு'வின் சுயம்வரம் பற்றிய நிகழ்ச்சியே இந்த இசை நாடகத்தின் கருப்பொருள். 'இந்துமதி பரிணயம்' என்னும் வடமொழி இசை நாடகமாகும்.

இந்த நாடகத்தை இயற்றியவர் தஞ்சை மராட்டிய மன்னர்களின் இறுதி அரசரான 'சிவாஜி மன்னர்'. இவர் 1832 முதல் 1855 வரை தஞ்சையை அரசாண்டார். இம்மன்னர், அன்னபூர்ணு பரிணயம், நடேச விலாசம் ஆகிய இரண்டு மராட்டிய நாடகங்களையும் இயற்றியுள்ளார். இம்மூன்று நாடகங்களும் இந்த நூல் நிலையத்தின் வெளியீடாக வெளிவந்துள்ளன.

இந்த நாடகத்தின் பதிப்பாசிரியர் பேராசிரியர் திரு. V. கோபாலையங்கார் M. A., அவர்கள். இவர் இந்த நூலகத்தில் நூலகராகப் பணியாற்றியுள்ளார். வடமொழியிலும் ஆங்கிலத்திலும் சிறந்த புலமை பெற்ற அறிஞர். இந்த இசை நாடகத்தைச் சிறந்த முறையில் வெளியிட்டுள்ளார். அன்னாரின் பணி இந்த நூலகத்தால் என்றும் நினைவு கூரத்தக்கது. இந்த நாடகம் இந் நூலகப் பருவ இதழ் 22, 23 ஆம் தொகுதிகளில் வெளிவந்துள்ளன. இது ஒரு off-print இதன் மூல ஓலைச்சுவடி தெலுங்கு மொழிப் பிரிவில், கிரந்த எழுத்தில் M. 659-ஆம் எண்ணாகப் பதிவு பெற்றுப் பாதுகாக்கப்பெற்று வருகிறது.

வழக்கம்போல் இந்நூலக வெளியீடுகளை விரும்பிப்பெற்று படித்துப் பயன்பெறும் ஆய்வாளர்களும், மொழி ஆர்வலர்களும் இந்த நூலையும் வாங்கிப் படித்துப் பயன்பெறக் கேட்டுக் கொள்கிறேன்.

தஞ்சாவூர்.

7—12—89

ஸ்ரீநிவாசன்,
வடமொழிப் பண்டிதர்,
சரசுவதி மகால் நூலகம்.



॥ श्रीः ॥

तञ्जानगराधीश भोसलकुलतिलक शिवाजीमहाराज विरचितं

# ॥ इन्दुमतीपरिणयनाटकम् ॥

( यक्षगानात्मकम् )

जय कृतानतभरण जय सर्वहितकरण ।
जय सत्सु कृतकरुण जय भुवनशरण ॥ जय जय ॥ १ ॥

जय दीनभयहरण जय वेदनुतचरण ।
जय मञ्जुलाभरण जय सुगुणशरण ॥ जय जय ॥ २ ॥

जय धूतरिपुनिकर जय विष्टपाधार ।
जय विनमदार्तिहर जय वीरवीर ॥ जय जय ॥ ३ ॥

जय गुप्तसर्वसुर जय रुचिमदाकार ।
जय विभो श्रुतिसार जय शुभागार ॥ जय जय ॥ ४ ॥

शरणमाप्तकृपौघपूरित
शरणमिन्द्रमुखार्चित ।
शरणमर्पितविनमदीप्सित
शरणमार्यभवाच्युत ॥ १ ॥

शरणमात्मविदोघभावित
शरणमब्जभवेडित ।
शरणमद्भुतगुणविभूषित
शरणमाप्तजनावृत ॥ २ ॥

## अथ मङ्गलम् ।

अर्यदांघ्रिसेवाय जय मङ्गलम्
जय देवदेवाय जय मङ्गलम् ।

जगदीड्यचरिताय जलजभवविनुताय
जननादिरहिताय जय मङ्गलम् ॥ १ ॥

सरसिजसुनेत्राय सकलनुतिपात्राय ।
सत्संघमित्राय सन्मङ्गलम् ॥ २ ॥

शुकसनकवेद्याय शुद्धानवद्याय ।
शुभदगुणहृद्याय शुभमङ्गलम् ॥ ३ ॥

निरुपमशरीराय निखिलमुदगाराय ।
निहतबहुसुराय नित्यमङ्गलम् ॥ ४ ॥

(मङ्गलान्ते)

**सूत्रधार:**— इत्थं नाट्यारम्भमारचयन् निर्विघ्नेन नाटकसमाप्त्यर्थं आदौ विघ्नेश्वरं प्रार्थयते —

गण्डाभोगगलन्मदाम्बुलहरीखेलद्द्विरेफावलौ
नासारंध्रविवेशनोत्सुकमतौ फीट्कारमातन्वते ।
सद्यो मस्तकधूननेन नमतां विघ्नं परं तामिव
क्षिप्रं वारयते नमो गणपते स्वामिन् सदैवास्तु ते ॥ १ ॥

अपि च—

भद्रं साधुकृते सदा कलयते लोकान् मुदा रक्षते
दैन्यं खण्डयते रिपूंश्च जयते दोषानपाकुर्वते ।
चित्ताब्जे वसते मुहुर्नततते रीशाङ्कके खेलते
स्यादेषा महते महागणपते भक्त्याञ्जलिर्देव ते ॥ २ ॥

एवं गणपतिवन्दनमातन्वन् सरस्वतीप्रार्थनां करोति —

यत्कारुण्यसुधातरङ्गविलसद्दृष्टचञ्चलस्य क्षणं
पातत्वं यदि लभ्यते सुचरितात् प्रायो जनानां तु तत् ।
सद्यः सत्कवितात्मना परिणमन् संराजते सर्वतो
वन्देऽभीष्टदपादपद्मयुगलां तां भारतीं श्रेयसे ॥ ३ ॥

इत्थं सरस्वतीप्रार्थनानन्तरं परमेश्वरप्रार्थना —

सर्वेष्टदाननिरतांघ्रियुगाब्जसेवं
सन्मण्डलीहृदयमृग्यवरप्रभावम् ।
भक्तौघसंपदनुकूलतरोज्ज्वलेहं
भक्त्या मुदेऽत्र परमेश्वरमाश्रयेऽहम् ॥ ४ ॥

इति परमेश्वरं प्रार्थयित्वा विष्णुं प्रार्थयति —

[1] लक्ष्मीभूमियुतो रहस्यलिलुदा क्रीडन् रसज्ञोत्तमः
कन्दर्पागमसर्वतन्त्रनिपुणस्तूर्णं पिधायाक्षिणी ।
एकस्याः करपल्लवेन च मिषादन्यामुखं लीलया
चुम्बन्नम्बुजलोचनो वितरतु श्रेयांसि भूयांसि वः ॥ ५ ॥

कमलानिशायि नेत्रं कमलाश्रितवक्षसं लसद्गात्रम् ।
कल्याणाय भविष्णुं कल्याणाम्बरमुपाश्रये विष्णुम् ॥ ६ ॥

एवं विष्णुप्रार्थनानन्तरं कवीन्द्रान् प्रार्थयति —

## गद्यम् ।

अनुदिनमपि सरसमृदुलपदविन्यासमधुरतरसूक्तिविशेषसाहित्यकरणचतुरान्, परिज्ञातसकलागमशास्त्रस्मृतिपुराणतत्त्वार्थसारान्, सकलनृपकुलतिलकलाल्यमानान्, सादरमतिरसिकजनाभिलाल्यमानान्, सर्वश्रुतिपुटानन्दनपटुतरप्रभावविशेषान्, संततमपि समुज्जृम्भमाणप्रतोषान्, कल्पनाविशेषकलितत्वरान्, कालिदासप्रमुखकवीश्वरान् निरन्तरममन्दतरश्रेयसे वन्दे ॥

सू० — (इत्थं कवीन्द्रप्रशंसां कल्पयन्, नेपथ्याभिमुखमवलोक्य) मारिष! इतस्तावत्।

(प्रविश्य)

पारिपार्श्विकः— भाव! एषोऽस्मि ।

सू० — आज्ञप्तोऽस्मि सकलभुवननिर्माणचातुरीधुरीणस्य, सज्जनसंत्राणनिपुणकटाक्षवीक्षणस्य, अविद्यान्धकारमोहिताशेषजनसञ्जीवनायेव मुकुटतटाविधृतविराजमाननूतनसुधाकरस्य, स्वसेवाविशेषसमुत्सुकाखिललोकपङ्कसंक्षालनायेव विकटजटाजूटप्रकटितगाङ्गपूरस्य, सर्वमङ्गलालय-

---

1 मूलकोशे 'पद्यम' इति निर्दिष्टम् ।

सर्वमङ्गलाङ्गीकृतवामभागस्य, सज्जनहृदयारविन्दभृङ्गस्य, त्रिविधलीलाविलोलबालकालंकृतोत्सङ्गस्य, निरवधिककृपासारपूरितान्तरङ्गस्य, भद्रानिकराकरस्य भगवतो **बृहदीश्वरस्य** चैत्रोत्सवयात्रायां मिलितेन सुगुणगणललितेन सकलकलाविशेषसद्रत्ननिकराकरेण विद्वत्प्रकरेण—

पारि० — कथमिव ?

सू०— इन्दोस्तु मण्डलवदुज्ज्वलमात्तलक्ष्म
मध्यप्रदेशमघतीव्रमलापहारम् ।
पद्योज्ज्वलं शुभमरिक्तरसं निरूप-
णत्वेन रम्यमिह यं वरमाहुरार्याः ॥ ७ ॥

तादृशं नूतनं प्रबन्धमभिनीय अस्मन्मनो विनोदय इति ।

पारि० — तर्हि किमिति विलम्ब्यते आर्येण ?

सू० — किंनामधेयमिति तन्नावधारयामि । (क्षणं विचिन्त्य, स्मृतिमभिनीय, सानन्दम्) अहो करस्थं वस्तु रथ्यायामन्विष्यतः सरणिमाश्रितोऽस्मि । नन्विहैव श्लोके प्रथमाक्षरमारभ्य प्रत्यष्टमाक्षरपंक्तिक्रमेण व्यक्तं ज्ञायत एवास्य नाटकस्याभिधानं **इन्दुमतीपरिणयम्** इति ।

पारि० — अहो ! कविचातुरीमहिमैतत् । आर्य, केनेदं प्रणीतमिति आलोच्यते ?

सू० — (सक्रोधम्) रे मूर्ख ! किमालोच्यत इति ? न ज्ञायते किमस्य कविः ? तर्हि श्रूयताम् । यः खलु अनुपमगुणविभूषणो, विरचिताश्रितजनतोषणो भाति, अपि च—

साहित्यादिकलानिधिः कुवलयामोदप्रदप्राभवः
श्रीमानिन्दुरिवातिदैन्यनिबिडध्वान्तौघविध्वंसकः ।
आप्तस्तोमचकोरपोषणकरः पूर्णोल्लसन्मण्डलः
श्रीतञ्जानगरेऽत्र सद्गुणवृतो राजा शिवाज्यैधते ॥ ८ ॥

किं च—

सन्तोऽनेककलाविशेषचतुरं स्वायत्तसिद्धिं मुहु-
र्धीरं सर्वगुणाकरं च करुणासिन्धुं प्रशंसन्ति यम् ।
यस्यालोकत एव भूवलरिपोः श्रीमद्वदान्येशितु-
स्सूर्यस्येव तमोऽपसर्पति रयाद्दारिद्र्यमाश्वेव हि ॥ ९ ॥

अपि च —

श्रीमद्यत्तरुणप्रतापतपनं संव्याप्तलोकत्रयं
सच्चित्ताब्जविकासकं रिपुमदध्वान्तच्छिदं सर्वदा ।
दीप्यन्तं तपनोऽनुकर्तुमखिलैस्स्वैरंजसोज्ज्वलै-
र्व्याप्याचरति प्रदक्षिणविधिं देवालयस्य ध्रुवम् ॥ १० ॥

पारि० — (स्मृतिमभिनीय) भाव, विज्ञायते । योऽयमस्माकमविता, सज्जनामोदनजागरिता, विमतकुलध्वान्ततरणिः, भोसलवंशमुक्तामणिः, सुकवीन्द्रः स **शिवाजी** महीन्द्र इति, येनैतदचिरप्रवृत्तमद्भुतसंविधानं सरलपदनिबद्धं रूपकमस्माकं हस्ते विन्यस्तम् । उक्तं च—

[1] सालंकारा सरसा मञ्जुपदन्यासराजमानार्या ।
विमला सत्सूक्तिरियं श्रीरिव सततं त्वया सुरक्ष्येति ॥ ११ ॥

भाव, तद्वंश्यानपि राज्ञो जानामि, ते तु उत्तरोत्तरं प्रसिद्धयशसः प्रथिताः । तथा हि—

[2]विद्वन्मण्डलगीतकीर्तिलसितश्रीशाहजीन्द्रः कवि-
स्तुकोजीनृपतिः प्रतापमहितो दाता प्रतापेश्वरः ।
विद्यादानकवित्वसद्गुणनिधिर्धृतारिवर्गः प्रभुः
सत्कीर्तिस्तुलजाधिपश्च शरभक्ष्मापालवर्यस्तथा ॥ १२ ॥

इत्थं विदिततद्वैभवेनापि चपलमनसा मया सर्वं विस्मृतमपि दिष्ट्या आर्येण स्मारितम् ।

सू० — कुतस्ते मनश्चपलता ?

पारि० — अस्ति मे रंगनन्दन इत्यग्रजः ।

सू० — विदितमेव मया । ततस्ततः ।

पारि० — स तु विदर्भदेशे स्वविद्याप्रकटनेन तत्रत्यभरतराजं सन्तोष्य तत्सुतामुद्वाहयितुं गतवान् ।

सू० — तदपि श्रुतम् । ततः किं पर्यवसन्नम् ?

पारि० — तत्र नानादेशवासिनो भरतराजाः तेन सह रङ्गसङ्गरमुपक्रम्य बद्धवैरं विवाहविघ्नमाचरन्तीति श्रुतम् । तत एव —

---

1 आर्या । 2 पद्यम् ।

सू० — (सोपहासम्) किमेतावदेव? स तु निसर्गनिपुणः खलु । तथापि तेऽतीव बद्धवैरा भवन्तु । सर्वेऽपि विघ्नकर्तारः । भगवानजस्तु सुमुखो विजित्य तान् साधयिष्यति हि कामम् । अलमतिप्रसङ्गेन । तदारभ्यताममुमेव वसन्तमधिकृत्य सङ्गीतकम् । एष हि —

सन्मल्लीमुकुलातिलोलमधुपोपक्रान्तझंकारकः
चूतांकूरनिषेवणातिविलसत्पुंस्कोकिलौघस्वरः ।
संराजन्मलयाचलप्रविचलन्मन्दानिलात्युज्ज्वलः
शृङ्गारैकनिधिर्ऋतुर्विलसति श्रीमान् वसन्तो वरः ॥ १३ ॥

अये अस्मद्भागधेयवशात् सर्वमपि सम्भृतम् । तथा हि —

वाक् शृङ्गाररसोज्ज्वला वरकवेः सभ्या रसज्ञोत्तमाः
ईर्ष्यापेतधियो बुधा वयममी नाट्ये धुरीणाः परम् ।
कालोऽयं कुसुमाकरोऽतिसुभगः कामं च भावोऽधुना
मे दौवारिकवत् सदैव निरताः कार्येषु चाज्ञाकराः ॥ १४ ॥

(नेपथ्ये उच्चैः साटोपम्)

रे रे! मूर्ख किमात्थ दौवारिकवदिति ।

पारि० — (सभयम्) आर्य परित्रायस्व, परित्रायस्व ।

सू० — वत्स, मा भैषीः । एष मम भागिनेयो रङ्गतिलकः दौवारिकवेषधारी प्रसङ्गान्मदुक्तावागतं स्वनामधेयमाशंक्य वदति । तत्त्वमपि अनन्तरकरणीयाय सज्जीभव । अहमत्रैव स्थित्वा सर्वं साधयामि ।

पारि० — तथा (इति निष्क्रान्तः ।)

प्रस्तावना ।

(ततः प्रविशति दौवारिकः ।)

दरु ।

दौवारिकः समायाति
द्रुतमायाति च दौवा ....॥

अत्योज्ज्वलत्कनकवेत्रो विलोलतरनेत्रो
भृशं कुटिलगात्रो भीषयन्निव दौवा .. ॥ १ ॥

राजाधिराज सुरराजादिनुत
रघुराजानुपम समाजान्मुदैव दौवा ... ॥ २ ॥

दौवारिकः — (परितो विलोक्य सरोषम्) रे रे! दौवारिकवदाज्ञाकर इति किं परिहसितम् ।

सू० — आर्य, न किमपि ।

दौ० — हुं मूर्ख, किं न किमपीति संवरणं कुरुषे ।

सू० — बिभेमि तवाटोपेन ।

दौ० — विस्रब्धं वद ।

सू० — मन्मनोवृत्तिमुद्दिश्य भणितम् ।

दौ० — इयदेव वा! (इति सोन्मादम्, सूत्रधारं प्रति) कुतस्तावदहमायातः?

सू० — किमसम्बन्धं प्रलपसि? कुतो वा । किमहं जाने?

दौ० — रे जाल्म, राजसेवकोऽयमिति किं मां न गणयसि? (इति वेत्रदण्डेन प्रहर्तुमिच्छति ।)

सू० — (परिहृत्य) आर्य, किंनामधेयोऽसि?

दौ० — (अनाकर्णितकेन परिभ्रमति)

सू० — (उपसृत्य) अये, किमेतत् त्वच्चेलांचलेऽवलम्बते?

दौ० — (दृष्ट्वा सभयमुत्तरीयमगोह्य) हन्त! दुष्टदर्वीकरः कुण्डलितः । न ते मार्गमागच्छामि । मां मा भीषय । परित्रायस्व । (इति सूत्रधारं गाढमालिङ्गति ।)

सू० — मा भैषीः । (इति तं समाश्वासयति ।)

दौ० — (चेलाञ्चलाद्गलितं पत्रिकावलयमालोक्य भीतमना दूरतस्तिष्ठन्नेव वेत्रदण्डेन प्रहरति ।) अये, कुण्डलतां न मुञ्चति (पुनः प्रहृत्य) अये किमेतदित्युपसृत्य, पश्य (इति सूत्रधारं निरस्यति ।)

सू० — (विलोक्य) किमरे मूढ पत्रिकावलयं प्रहृतवानसि?

दौ० — (स्मृतिमभिनीय) हन्त हन्त! चिन्तान्तरव्याप्तचित्तेन पत्रिकापि मया विस्मृता ।

सू० — कीदृशं ते चिन्तान्तरम्?

दौ० — किं तवापि गोपनीयम्? अद्य मद्भार्या कोऽपि स्वपितृकुलबन्धुरागत इति तदर्थं पाकविशेषान् कृतवती । तदन्न चिरायतो ममापि लभेत वा न वेति ।

सू० — (विहस्य) साधु साधु! बलवत्तरं खलु चिन्तान्तरम् । भवतु, भवान् कुत्रायातः?

दौ० — आज्ञप्तोऽस्मि महाराजरघुमहाराजेन यथा "दौवारिक ! पत्रिकामिमां समर्प्य मद्वचनादुच्यतां सेनापतिर्विजयभूषणः — विदर्भनगरगमनाय सेनास्सन्नह्यन्तामिति ।"

सू० — दौवारिक किं विदर्भदेशगमने प्रयोजनमिति जानासि ?

दौ० — न जानामि ।

सू० — अद्य महाराजः कुत्रास्ते ?

दौ० — केनापि मुनिना सह सल्लपन् आत्मजसहितः एकान्तमण्डपमधिवसति ।

सू० — कोऽसौ मुनिः ?

दौ० — नाहं जानाम्येनम् ।

(नेपथ्ये)

रे ! मूर्ख ! मामपि न जानासि ?

उभौ — (सविस्मयं किमिदमित्यन्योन्यमालोकयतः ।)

(पुनर्नेपथ्ये)

सखे गालव ! इत इतः ।

सू० — कस्यायमालापः ?

दौ० — वसिष्ठमहर्षिशिष्यस्य कुशलमतेरिव प्रतिभाति कण्ठस्वरः । तदनवलोकनीयात्रवर्णयोरनयोर्दृष्टिपथमपहायान्यत्र गच्छामि । (इति निष्क्रान्तः)

सू० — अहं किंचिदन्यतः स्थित्वाखिलं ज्ञास्यामि । (तथा कुर्वन्) अये, वसिष्ठशिष्यावेताविति एव प्रविशतः ।

दरु ।

शिष्यात्रायातौ ।
शुद्धचरितौ । शिष्या ... ॥
वसिष्ठमुनिवर । शिष्या ... ॥
भसितोज्ज्वलनिटिलौ विनीतौ
भद्रौ सितवसनाद्युपवीतौ ।
मेधावन्तौ वर्णिप्रवरौ
मेखलया वरमौञ्ज्या रुचिरौ ॥ शिष्या ... ॥ १ ॥

कुशलमतिः — गालव कुत्र गच्छसि ?

गालवः — वयस्य कुशलमते ! उपाध्यायनिदेशेन वत्सतरीमानेतुम् ।

कु० — तदानयनेन किं प्रयोजनमुपाध्यायस्य ?

गा० — सखे न जानासि किम् ? अस्मदुपाध्यायाश्रमे महान् व्याघ्रोऽद्य प्रातरागत्य वर्तते ।

कु० — कीदृशोऽसौ व्याघ्रः ?

गा० — उच्यते, श्रूयताम् ।

[1] सोऽयं धूसररोमराजिभिरभिव्याप्ताननो भीषणो
हुंकारं कुटिलेक्षणो वितनुते दृष्ट्वास्मदादीन् परम् ।
हस्ते किञ्चन धारयन् प्रतिपदं तीक्ष्णैर्नखाग्रैः पुन-
र्मार्जारी दृढवंशतल्पमिव तत्प्राण् प्राणिति प्रोर्णुते ॥ १५ ॥

कु० — (विहस्य) अरे मन्दमनीष, वीणाविनोदरसिको नारदमुनिः खल्वसौ ।

गा० — तर्हि वत्सतर्या किं प्रयोजनम् ?

कु० — देवर्षिरयः अतिथिरागत इति तन्मधुपर्कार्थमेवेति मन्ये ।

गा० — स तु कुत आयातः ?

कु० — विदर्भनगरात् ।

गा० — किमर्थम् ?

कु० — अस्ति खलु विदर्भराजस्य सुकृतसर्वस्वम्, निर्माणकौशलमिव विधातुः, विजयास्त्रमिव विश्वैकजेतुः कुसुमायुधस्य, संजीवनमिव शृङ्गाररसस्य, सार इव सौन्दर्यस्य, मध्यरत्नमिव तरुणीजनचूडामणेः, संमोहनमिव युवजनस्य, निरतिशयलावण्यस्य निकेतनम्, सकलसौभाग्याकरम् इन्दुमतीनाम कन्यारत्नम् ।

गा० — श्रुतपूर्वमेवैतत् लोकोत्तरगुणोज्ज्वलम् ।

कु० — तस्यास्स्वयंवरमहोत्सवः प्रवर्तत इति अस्मन्महाराजाय निवेदयितुमागत इति राज्ञः प्रियसुहृदस्तनयमुखाच्छ्रुतम् । तमस्मद्गुरुरातिथ्यायामन्त्रयतीति प्रतिभाति ।

गा० — स विदर्भराजस्स्वयंवरार्थमस्मन्महाराजाय पत्रं प्रेषितवान् हि ?

कु० — अथ किम् ।

---

1 पद्यम् ।

गा० — तर्हि नारदागमने को विशेषः ?

कु० — अस्त्येव विशेषः ।

गा० — कथमिव ?

कु० — (कर्णे) एवमिव ।

गा० — युज्यत एतत् । तर्हि, अपि गमिष्यति निजतनयविवाहार्थं महाराजः ?

कु० — न केवलं महाराजः । अपितु अस्मद्गुरुप्रभृतयोऽपि श्वो यास्यन्ति ।

गा० — (सहर्षम्) साधु साधु, अस्माकमपि कल्याणमेव ।

कु० — तत्कथम् ?

गा० — यद्यथेष्टं सूपान्नं भक्ष्यजालं च तत्र प्राप्स्यते (इति सन्तोषातिशयं नाटयति ।)

कु० — वयस्य, सर्वत्र आहारचिन्तैव तव ।

गा० — नातः परं किंचिदस्ति मे । भवतु । भवान् क्व पुनरिहायातः ?

कु० — समित्कुशाहरणायागतः । त्वत्संदर्शनेन विलम्बितः । तदर्थमेव यास्ये । त्वमपि गुरुनियोगमशून्यं कुरु । (इति गन्तुमिच्छति ।)

गा० — किमध्ययनाय शीघ्रमागच्छसि ?

कु० — नास्त्यद्याध्ययनम् । महदागमनमनध्ययनकारणं हि ।

गा० — (सहर्षम्, सहस्ततालमुन्नृत्य) सखे कुशल ! मम सर्वस्वभूतं मन्मात्रा निजोत्तमचेलाद्दत्तं मयापि विशेषदिवसे धार्यमाणमेतत्ते पारितोषिकमस्तु । ( इति कौपीनमुन्मुच्य दातुमिच्छति ।)

कु० — रे मूढ, अन्येन धृतमन्यस्य न योग्यम् । (इति निरुन्धन्) सखे, महान् कालविलम्बो जातः आवयोर्गुर्वाज्ञानुष्ठाने ।

(इति निष्क्रान्तौ ।)

सु० — विदितं वेदितव्यम् । आः । (कर्णं दत्वा) किमालापः श्रूयते ? (पुनः कर्णं दत्वा) अहो अस्मद्गुरोर्महिमा, यन्मम खेचरभाषायामपि पाण्डित्यम् । (पुनः कर्णं दत्वा) गन्धर्वयुग्मं संलपति — पुमान् किमाह — 'प्रिये पश्य इन्दुमतीस्वयंवरोत्सवाय विदर्भदेशयायिनो विमानाधिरूढान्निर्जरगन्धर्वसिद्धसाध्यादीन्' इति । स्त्री किमाह — 'नाथ ! अपि ज्ञायते तत्र के वा कुत्रत्या राजानस्समागताः, को वाऽस्या विदर्भकन्यायाः पतिर्भविता' इति । पुमान्

किमाह — 'प्रिये! शृणु तावत् अङ्गवङ्गकलिङ्गकाश्मीरमगधनिषध (कोषध?) कोसलकुरु कौशाम्बकेकयसिन्धुसौराष्ट्रमहाराष्ट्रारट्टकाशीपारसीककर्णाटविराटकाञ्चीकोङ्कणयवनान्ध्रनेपाल - केरलचोलादिदेशेभ्यो विदर्भराजेन समाहूता राजानस्सत्वरं समागताश्च' इति । स्त्री किमाह — 'सोऽयमुर्वीवलयतिलकायमानो निखिलमहीपालकुलमकुटतटरुचिरतरमणिकिरण-नीराजितचरणारविन्दस्य रघुमहाराजस्य तनयः, स्मर इव मूर्तिमान्, शृङ्गार इव विधृतविग्रहः, प्रतापस्य साररूपः, विशेषविद्यागुणनिधिरजो नाम युवराजोऽपि तत्रायातो वा, महेन्द्रस्तु दैत्यकुलसङ्गरसङ्गतप्रसङ्गे पितुरधिकपराक्रमशालिनं यं सभायामतिप्रशंसति?' इति । पुमान् किमाह — 'प्रिये सोऽपि सकलसन्नाहसहितेन सपुरोधसा पित्रा सह अयोध्या-नगरान्निष्क्रम्य विदर्भनगरशाखानगरे सेनां निवेश्य तत्रैव विदर्भराजनिर्दिष्टायामुपकारिकायां वसतीति इदानीमेव मत्प्रियसुहृदश्चित्राङ्गदस्य मुखाच्छ्रुतम् । स एवाजमहीपालस्तस्या इन्दु-मत्या वरो भवितेति मन्ये' इति । स्त्री किमाह —'तत्कुत' इति । पुमान् किमाह —'प्रिये!

मनोज्ञरूपेण गुणेन कामं शीलेन मत्या वयसा च तुल्यौ ।
श्रीमानजश्चेन्दुमती विधिस्तावयोजयन् कीर्तिनिधिः कथं स्यात् ॥ १६ ॥

अत एहि ।' स्त्री किमाह — 'तर्ह्यावामपि तदुत्सवानन्दानुभवाय त्वरितं गच्छाव इति ।

सू० — सम्यगुक्तं, 'कीर्तिनिधिः कथं स्यात्' इति ।

(नेपथ्ये)

रे रे मूर्ख! कीर्तिनिधिरेवाहम् ।

सू० — (ससंभ्रमम्) कीर्तिनिधिर्नामायं युवराजरघुनन्दनप्रियसुहृत् प्रसङ्गादस्मदुक्तवचनं स्वस्मि-न्नधिरोपयति ।

(पुनर्नेपथ्ये)

स्थाप्यन्तामटवीतटस्य परितः सेनास्ततो वागुरा
बध्यन्तां निबिडं श्ववारणवरा गच्छन्तु सर्वेऽग्रतः ।
अध्वश्रान्तिमनाकलय्य कुतुकादलेप पुत्रो रघो-
स्स श्रीमान् मृगयाविहाररसिकस्तूर्णं समागच्छति ॥ १७ ॥

सू० — कीर्तिनिधिस्सेनापतिस्समाज्ञापयति । महाराजो रघुनन्दन इदानीमागच्छेत् । तदहं किंचि-दन्यतास्तिष्ठामि । (तथा कृत्वा, पुरो विलोक्य) मृगयोचितपरिवारोऽयं रघुनन्दनः प्रविशति ।

दरु ।

सूर्यवंशमण्डनरघुसूनुरिजना-
वार्थ एति समधिरूढवाजी ह्यधुना ।
सुजनमुख्यसुहृदा सह सुखकरससता-
मजमहीपतिस्सकल(स्समस्त)मनुजशासिता ॥ १ ॥

सुरजनेज्यकीर्तिरपि च सुमतिमान्मुदा
वरपराक्रमो विमतवन्दितस्सदा ॥ २ ॥

चापबाणपाणिरधिकचतुर आश्रित-
तापभञ्जने अतीव तत्परोऽविता ॥ ३ ॥

मृगकुलं विलोकयन्नमर्षतो महान्
मृगयोचितवेषमनुजमण्डलैस्सह ॥ ४ ॥

रघुनन्दनः— सखे कीर्तिनिधे !

पश्यैनं शरताडितोऽपि वलितग्रीवो रुषा पश्यति
द्वीपी शल्यक एव धावति भिया खड्गी परं ताडितः ।
गच्छन्नेव पतत्यधः परमितः क्रीडापरोऽयं मृगो
वध्यो नैष हि ताड्य एव नितरां भल्लूकवर्गस्त्वयम् ॥ १८ ॥

कीर्तिनिधिः— अहो, एतेषां पक्षिणां व्यापारः । वयस्य अत्र तावत् —

[1] पक्षाभ्यां पिदधाति नैजशिशुकं भीत्या त्वियं शारिका
नो दृष्ट्वा कलविङ्क एष विटपे पत्रान्तरे लीयते ।
अज्ञातो न इवापसर्पति पुरः पश्यन् शनैस्तित्तिरिः
संछन्नः श्रयते च कोटरमुखान्नो वञ्चयन् सारसः ॥ २० ॥

रघुनन्दनः— वयस्य, स्वभाव एवैषां । इतस्तावद्यूथपतिना सह मृग्यो विहरन्ति । अहो निसर्गतो लोभनीयमासां चरितम् । तथा हि—

---

1 पद्यम् ।

पश्येतास्सरलातिमुग्धमधुरा लोलोज्ज्वलाक्ष्यो भिया
पश्यन्त्याशु पुनः पुनर्विवलितग्रीवा मनोज्ञं च नः ।
[1] संदृष्ट्वा तु मृगीरिमा मम शरस्पर्शेऽपि नालं करः
चेतः स्निह्यति काममत्र वलते दृष्टिर्दयानिर्भरा ॥ २१ ॥

( नेपथ्ये कलकलः )

रघु० — ( कर्णं दत्वा ) वयस्य, किमेतदिति विज्ञायताम् ।

( पुनर्नेपथ्ये )

एषोऽस्मिन्निन्नदासहिष्णुरमितोऽमर्षाद्वनं भञ्जय-
न्नादायाशु करेण सालविटपं छित्त्वा दृढा वागुराः ।
दुर्ग्राह्यः कलयन्मुहुः प्रतिभयं फीत्कारमुच्चैः परं
मत्तो नः खलु भीषयन्निह महानायाति वेगाद्गजः ॥ २२ ॥

( सर्वे संभ्रान्ताः । )

रघु० — सखे ! अस्मत्परिजनस्यालापोऽयम् । तदिदानीं मत्तहस्तिनं निहन्मि । ( इति सर्वे निष्क्रान्तः । )

कीर्ति० — ( दृष्ट्वा ) आश्चर्यमाश्चर्यम् ।

[2] राज्ञः कुमारेण तरस्विनायं बाणेन सन्दानितमस्तकस्सन् ।
वेगात्पतन् भूमितले पुनश्च गन्धर्वरूपेण मुदोदतिष्ठत् ॥ २३ ॥

( पुनर्नेपथ्ये )

राजन् प्रीतोऽस्मि कामं त्वयि गुणजलधे गृह्यतां दिव्यमस्त्रं
शत्रूणां दुर्जयानामपि च खलु मनोमोहनं श्रेष्ठमेतत् ।
गन्धर्वो दन्त्यभूवं मदविनयबलादाशु रुष्टर्षिशापा-
न्मुक्तस्तस्मात् त्वयाद्य क्षितिप निजपदं याम्यहं स्वस्ति तेऽस्तु ॥ २४ ॥

कीर्ति० — अस्मादप्यनुग्रहो वयस्यस्य । अथवा किमद्भुतम् ?

दुष्टादपि महान् भद्रं सतोऽप्यशुभमेत्यसत् ।
कृती व्यालाद्रत्नमघी वज्रपातं घनादिव ॥ २५ ॥

1 प्रयोगश्चिन्त्यः । 'दृष्ट्वा चापि मृगीरिमा' इति साधु भवेत् । 2 पद्यम् ।

3

( प्रविश्य )

रघु० — सखे ! दिष्ट्याऽनुगृहीतोऽस्मि गन्धर्वराजेन ।

कीर्ति०— महाराज ! किंचिच्छ्रान्त इव भवान् । तदत्र विटपिमूलतले क्षणमुपविशावः ।

रघु० — ( परिजनान् प्रति ) स्कन्धावारमेव गच्छत ।

( परिजनाः तथेति निष्क्रान्ताः । )

रघु० — ( पुरोऽवलोक्य ) वयस्य ! अदूरेऽत्र अतिमञ्जुलतरविटपिकुलपरिशोभितं पुष्पंधयानुभूयमानकुसुमोज्ज्वलमल्लिकादिलताविराजितं दृश्यते कस्य वनमेतत् ?

कीर्ति० — विदर्भराजान्तःपुरोपवनमिति मन्ये ।

रघु० — तत्रैवोपविशावः । अन्तःपुरवृत्तान्तः कदाचिद्विदितो भवेत् ।

कीर्ति०— तर्हि गच्छावः । ( इति गमनं नाटयतः । )

रघु० — अत्रैव मणिमयवेदिकालंकृते रसालमूले उपविशावः । ( तथा कुरुतः । )

रघु० — वयस्य ! अपि सत्यं त्वदुक्तं विदर्भपुरोहिततनयस्य गुणनिधेस्तद्वचनम् यत् — 'अनुपदं प्रियसख्या कलावत्या प्रकटितगुणे मयि इन्दुमती अत्युत्कण्ठिता वर्तते' इति ?

कीर्ति० — किमन्यथोक्तपूर्वोऽहम् ?

रघु० — किं तथा भवेत् ?

कीर्ति० — किमुच्यते किं भवेदिति ? शृणु तावत् —

सा बाला स्मरसुन्दराकृतिजुषं स्वप्ने भवन्तं प्रियं
दृष्ट्वा त्वद्गतचित्तवृत्तिरनिशं न स्नाति न क्रीडति ।
नो भुङ्क्ते च करे निधाय वदनं बाष्पांभसां बिन्दुभिः
प्रोत्तुङ्गस्तनयोर्युगस्य नितरां पुष्णाति हारश्रियम् ॥ २६ ॥

रघु० — ( स्वगतं )

पूर्णेन्दूज्ज्वलवदनां प्रफुल्लराजीवदललसन्नयनाम् ।
तां वीक्ष्याखिलमान्यां कदा कृती स्यां विदर्भनृपकन्याम् ॥ २७ ॥

कीर्ति० — सर्वथा प्राप्तमनोरथोऽसि ।

रघु० — ( लज्जां नाटयन् ) वयस्य ! अलं परिहासेन । कथं घटेतैतत् निरुन्धत्सु निखिलभूपालेषु ? अपि तु—

विप्रयुक्ते तद्विवाहे लोलो यास्यामि हास्यताम् ।
उच्चैःस्थितफलासक्तो भो वामन इव स्फुटम् ॥ २८ ॥

(नेपथ्ये)

सत्यं वामनोऽस्मि ।

रघु० — वयस्य ! किमेतत् ? कस्य आलाप इति विज्ञायताम् ।

कीर्ति० — दृष्टान्तत्वेन भवदुक्तशब्दो घुणाक्षरन्यायेन कस्मिन्नपि पर्यवसन्नः ।

(पुनर्नेपथ्ये)

सखे कुटिलाङ्ग ! अत्रैवान्तःपुरनियोगमनुतिष्ठावः ।

कीर्ति० — महाराजविदर्भराजान्तःपुरपरिचारकस्यैवालापः ।

रघु० — युज्यत एतत् ।

कीर्ति० — कंचिदन्तरितावेव सर्वं ज्ञास्यावः । (तथा कुरुतः ।)

सूत्र० — कुसुमापचयार्थं वामनकुटिलाङ्गौ प्रविशतः ।

## दरु ।

वामनकुटिलावयवावेतावायातः पुरुषौ ।
काममखिलजनहास्यतया विधिकल्पितनिजवेषौ ॥ वाम० ॥

परमपि नृपतेरन्तःपुरजनपरिचर्यानिरतौ ।
करकल्पितसुमपात्रौ स्वप्रभुकार्येषु विनीतौ ॥ वाम० ॥ १ ॥

वामनः — अहो मे अङ्गस्य तुङ्गत्वम् ! (इति शिरोऽवनम्य प्रचलन्)

कुटिलाङ्गः — सखे ! किमवनमन् गच्छसि ?

वा० — रे मूर्ख ! किमजानन्निव पृच्छसि ? तुङ्गतया द्रुमविटपेषु शिरो लगेदिति ।

कुटि० — अहो, अतितुङ्गः खलु भवान् ।

वा० — किमतितुङ्ग इति परिहससि ? शृणु रे मूर्ख ! अन्तःपुरबालिकाजनो जलविहारसमये क्रीडासरस्तरणे मदीयस्कन्धभागमारुह्य कतिवारं सप्रहारं मां न प्रायुङ्क्त ।

कुटि० — किं सप्रहारम् ?

वा० — किं मामल्पं मन्यसे ?

कुटि० — महानेव भवान् भवतु । क पुनरिहायातोऽसि ?

वा० — भर्तृदारिकाप्रियसख्या कलावत्या आज्ञप्तोऽस्मि—

कुटि० — कथमिव ?

वा०— 'अये, कुटिलगात्रसहितस्त्वं फलकुसुमान्याहर' इति ।

कुटि०— जानासि किं किमर्थं तानीति ?

वा०— जानामि । वत्साया इन्दुमत्या मनोरथप्राप्त्यै इष्टदेवतार्चनार्थम् ।

कुटि०— कीदृशोऽस्या मनोरथः ?

कीर्ति०— महाराज! सावधानं श्रूयताम् ।

रघु०— अवहितः शृणोमि । (स्वगतं) किमिदानीं वक्ष्यति ?

वा०— यस्तु स्वप्ने दृष्टो रघुनन्दनः, तमेव भर्तारमाप्नुयामिति ।

कीर्ति०— वयस्य, महाराज! अपि श्रुतम् वामनवचनम् । यतस्त्वयोक्तं किं परिहासेनेति ।

रघु०— (स्वगतम्) उल्लुलितमिवाद्य मे हृदयम् (प्रकाशम्) भवतु, परस्ताज्ज्ञातव्यम् ।

कुटि०— साधु साधु! निसर्गनिपुणा खलु भर्तृदारिका । उचित एवास्या अनुपमगुणरुचिरे रघुकुमारेऽभिनिवेशः । तथापि राज्ञा मत्स्ययन्त्रवेधनं यः करोति तस्मै सुता देयेति प्रतिज्ञातं खलु । अत एतद्दुर्घटमिव प्रतिभाति ।

रघु० — वयस्य! अत्र तावन्मम परेषां सामर्थ्यमात्मवैदग्ध्यं चालोच्य चिन्ता नोद्भवति ।

कुटि० — भवतु, कुत्रेदानीं कलावती वर्तते ?

वा० — भर्तृदारिकायास्सकाशादागत्य केनापि सल्लपन्ती बाह्यकक्ष्ये वर्तते ।

रघु० — किमस्मद्विदूषकेन भवितव्यम् ?

कुटि० — क सा भर्तृदारिका ?

वा० — यः कोऽप्यस्ति खल्वत्र ?

कुटि० — (परितो विलोक्य) कोऽपि नास्ति । विस्रब्धं भण ।

वा० — केनापि कारणेनास्मद्राज्ञा बहिरनागच्छन्त्येवान्तर्गृह एव सा गोप्यते ।

कुटि० — किं कारणं तत् ? कथं तस्या बहिरागमनं च ?

वा० — (कर्णे एवमिति कथयति)

कुटि० — साधु साधु । भवतु । प्रकृतकुसुमापचयमेव कुर्मः ।

रघु०— किं तद्भवेत् ?

कीर्ति०— स्पष्टमग्रे भविष्यति ।

वा०— सखे! त्वं तावत्कुत्र गतवानसि?

कुटि०— विविधमन्त्रनिधेरार्यजीवसिद्धेर्भवनम् ।

वा०— स्वामिकार्येण वा?

कुटि०— नहि, नहि, आत्मकार्येण ।

वा०— किं ते तत्र कार्यम् ?

कुटि०— (सक्रोधम्) किमजानन्निव पृच्छसि ?

वा०— सत्यं न जानामि ।

कुटि०— लड्डुकं चेत्ते विज्ञातं भवेत् ।

वा०— संक्षम्योच्यताम् ।

कुटि० — राजभवने सञ्चरामि खलु ?

वा० — अथ किम् ?

कुटि० — तत्रत्या राजकीया मुहुर्मां पश्यन्ति ।

वा० — अतिसुन्दरः खलु भवान् । ततस्ततः ।

कुटि० — तेन दृष्टिदोषेण अङ्गानि मे न स्वस्थानि । अतोऽभिमान्त्रितुम् ।

वा० —(विहस्य) साधु साधु । सुविहितम् । अस्मद्राजभवनस्था उष्ट्रा अपि त्वया तत्र किं न नीताः ?

कुटि० — (सामर्षमालोलपृष्ठगण्डुकमुन्नमय्य) किं परिहससि? (इति वामनं प्रहर्तुमिच्छति ।)

वा० —(नाट्येन परिवार्य, सोपहासम्) वयस्य ! तव पृष्ठभागे किमुच्चलति ?

कुटि० -- सौभाग्यलक्ष्म्या उपहारभूतं, मूर्ख, जानीह्येतत् ।

वा० — अरे! मन्दं जल्प । कुतो वास्माकमपि सौभाग्यप्रसक्तिः ।

(नेपथ्ये)

गृह्यतामेष खलः ।

वामनकुटिलाङ्गौ -(सभयम्) किन्न्वेतत्?

वा०— मन्दमते ! त्वन्मूलक एवायमनर्थः ।

( पुनर्नेपथ्ये )

अत्रापि चान्तःपुरबाह्यकक्ष्ये क्रीडापरं वत्समुपेत्य कश्चित् ।
छलेन संमोह्य तदीयहस्तात् किंचिद्गृहीत्वातिजवात्प्रयाति ॥ २९ ॥

बा०— दिष्ट्या आवामुद्दिश्य नैतत् । अपि तु कंचन चोरमुद्दिश्य । तदावामपि फलकुसुमानि गृहीत्वा त्वरितं गच्छावः ! ( इति निष्क्रान्तौ । )

रघु०— ( दूरतोऽवलोक्य ) सखे कीर्तिनिधे ।

कोऽसौ निलीय च निलीय तरुष्वतीव
भीत्या प्रकम्पिततनुः खलु काननेऽस्मिन् ।
आलोलदृष्टिरजवत्पुरुषस्तु कोऽपि
खिन्नोऽपसर्पति शनैर्न इहावलोक्य ॥ ३० ॥

गृह्यतामेषः ।

कीर्ति० — ( शीघ्रमुत्थाय, पश्यन्, सहर्षम् ) वयस्य ! उभावस्मत्सेवकावेव पुरुषं तं निर्बद्ध्यात्रैवानयतः ।

सूत्र० — पश्चाद्बाहुयुगे बद्धं पुरुषमादायोभौ राजकिङ्करौ प्रविशतः ।

दरु ।

बद्ध्वा पुरुषावायातौ
बलेन लसितौ । ॥ बद्ध्वा ॥

खड्गपाणी धावन्तं तौ
खलमुद्वीक्ष्य च तर्जयन्तौ ।
गद्गदोत्कण्ठं वीरौ
गहनमध्यादतिधीरौ ॥ बद्ध्वा ॥

उभौ० — ( राजानमुपसृत्य यथोचितं प्रणम्य ) महाराज ! आदिष्टौ स्वः आर्यमहाराजेन, "आयुष्मान् कुत्रास्ते? त्वरितं विज्ञायताम्" इति । तदर्थमागतयोरावयोर्मार्गमध्ये गृहीतोऽयम् । ( इति चोरं निर्दिश्य तं राजपादयोः पातयतः । )

रघु० — ( पुरुषौ प्रति ) पृच्छ्यतामेषः — "कस्त्वम्? कुत्रत्यः? कुत आयातः?" इति ।

पुरु० — अये कुम्भीलक । कथय, कस्त्वम् ?

चोरः— न किमप्यहं जाने ।

रघु० — ( सक्रोधम ) ताड्यतामेष दुरात्मा ।

पुरु० — (तथा कुरुतः । )

चोरः — ( सोद्वेगम् ) हन्त ! हन्त ! ( इति व्याक्रुश्य ) परित्रायत । परित्रायत ( इति दन्तान् बहिर्दर्शयति । )

पुरु० — मोक्ष्यसे, सत्यमुच्यताम् ।

चोरः— सत्यं न जाने ।

कीर्ति० — ( विहस्य ) युक्तमाह । अनभ्यस्तमेव तत् चोराणाम् ।

रघु० — किमद्यापि न वदति ? ( इति पुरुषौ पश्यति । )

पुरु० — कथय ( इति ताडयतः ।)

चो० — परित्रायत ( इति परितो विलोलनयनं पश्यति । )

पुरु० — कथय ! कथय !

चोरः— अहं खलु एतन्नगरसमीपवासी- ( इत्यर्धोक्ते ) शुष्यति मे जिह्वा । मुञ्चन्तु मामार्याः ।

रघु० — ( सरोषम् ) किमुपेक्षेथे ?

पुरु० — ( चोरं कपोले प्रहृत्य, वस्त्रमाकर्षन्तावेव भूमौ पतितं वस्त्रबन्धमादाय राज्ञस्समीपे दर्शयतः ।)

रघु० — उन्मुच्यतां बन्धः ।

पुरु० — ( तथा कुरुतः )

रघु० — ( निरीक्ष्य ) वयस्य ! रत्नघटितं विदर्भनामाङ्कितमङ्गुलीयमेतत् । पश्य ( चोरं प्रति ) कस्येदमङ्गुलीयकम् ? कथमाहृतम् ?

चोरः — ( मूर्च्छावानिव चक्षुषी निमील्य ) क्षुधितोऽस्मि ।

पुरु० — उच्यताम् ( इति पुनस्ताडयतः ।)

चो० — मातापितरौ मां निरीक्ष्य शोचयिष्यतः ।

कीर्ति० — असंबन्धं प्रलपति । उग्रदण्डेन दण्ड्यतामयम् ।

पुरु० — ( तथा कर्तुमुद्यतौ )

चोरः — (भीतिं नाटयन्) मुञ्चन्तु माम् । सत्यं वच्मि ।

पुरु० — उच्यताम्, मोक्ष्यसे ।

चोरः — अहमेतद्वनवासी शबरः ।

रघु० — ततस्ततः ।

चोरः — अद्य नानादेशान्तरादागतेन राजवर्गेण एतदङ्गुलीयाहरणार्थं प्रेषितोऽस्मि ।

रघु० — अनेन राज्ञां किं प्रयोजनम् !

कीर्ति० — किमपि प्रयोजनमुद्दिश्यैव एवं कृतं भवेत् । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति प्रसिद्धिर्हि । तदेतदङ्गुलीयकं गृह्यताम् । अनेनास्माकं महत्प्रयोजनं भवेत् ।

रघु० — (अङ्गुलीयकं गृहीत्वा). (चोरं प्रति) रे! सन्तुष्टोऽस्मि तव यथार्थवक्तृतया तद्गृह्यतां पारितोषिकम् (इति स्वेन धृतमाभरणमुष्णीषादिकं च वितीर्य)- (पुरुषौ प्रति) एनं विमुच्य युवामप्यार्यसमीपं गत्वा अहमिदानीमागच्छामीति वदतम् । (इति प्रेषयति ।)

पुरु० — (चोरेण सह निष्क्रम्य) (चोरं प्रति) कुतस्तवेदं पारितोषिकम् ? तिष्ठात्र पुनरपि विचारणीयमस्ति ।

चोरः — युष्माकमपि किंचित्पारितोषिकमस्तु ।

पुरु० — इदानीं त्वं प्रियवयस्यः संवृत्तः । (इति पुरुषौ निष्क्रान्तौ ।)

चोरः — (गच्छन्नेव) कैषा राक्षसी मामेवोपसर्पति ? (राजा कीर्तिनिधिश्च पश्यतः)

(नेपथ्ये)

राज्ञामिहाभिचरतां निवहेन वेगा-
त्संगृह्य गच्छ रघुसूनुमिति प्रयुक्ता ।
दिष्ट्याधुना स मम नेत्रपथं गतोऽसा-
वेकस्तदेनमुपगृह्य सुखाद्गमिष्ये ॥ ३० ॥

(इति राजाकल्पधरं चोरमाक्रम्य कर्षति)

चोरः — मामेषा राक्षसी कर्षति । (इति परिक्रुश्यति ।)

रघु० — सखे श्रुतं राज्ञामविनयम् ?

कीर्ति० — किमपि दुरितं नो भवेदस्माकं नारदानुग्रहात् ।

रघु० — भवतु एनं मोक्ष्ये । (इति निष्क्रान्तः)

कीर्ति— अत्र हि·

राक्षस्यमुं विधृतचापमुदीक्ष्य भीत्या
संत्यज्य चोरपुरुषं हि पलायतेऽसौ ।
राजा तु बाणसरणिं समतीत्य कामं
यातेति सत्वरमुपैति सखा ममैषः ॥ ३१ ॥

(प्रविश्य)

रघु — सखे, प्रादुर्भवति खलु मध्याह्नसमयः । अत्र हि —

यत्र क्वापि तमोऽस्ति वेति तपनः सन्द्रष्टुकामः किल
व्योमाग्रं सहसाधिरोहति करैराक्रम्य सर्वा दिशः ।
पान्थानां सदुपायसूचनविधौ बद्धादरेवाञ्जसा
छाया वृक्षकुलस्य मूलमयते भीतेव सन्तापतः ॥ ३२ ॥

कीर्ति — युक्तमुक्तम् । इदानीं हि —

[1] वृद्धिं याति मरीचिका सहरया तीव्रातपेनाभितः
पान्थानां सह जिह्वया च कुमुदश्रेणी परं शुष्यति ।
सन्तापेन सहाङ्गकेषु नितरां स्वेदस्समुज्जृम्भते
मीनौघेन जलाशये सह तलं जाड्यं भृशं याति हि ॥ ३३ ॥

तदद्य माध्यन्दिनविधिनिर्वाहाय उपकार्यामेव प्रविशावः । तत्र गुरवोऽप्यावां प्रतीक्षन्ते । (इति निष्क्रान्तौ ।)

सू — एवं मृगयाविधौ गान्धर्वाख्ये प्राप्ते, राज्ञ इन्दुमत्यामनुरागस्य च निरूपणानन्तरं, तस्या वृत्तान्तविशेषस्य राज्ञां विरोधमूलस्य च प्रकटनाय, इन्दुमत्यामनुरागदृढीकरणार्थं च विदूषकः प्रविशति ।

दरु 1

समायाति खलु विदूषको । बहुमुदात्र समा .... ॥
सहसा खलु कार्यसाधको । समा ... ॥
अन्तरङ्गसुहृदयं परम् रघुसुतस्य
चिन्तयन् शुभानि सादरम् ।

1 पद्यम् ।

सन्तमजमहीपतिं हृदा तमन्विष्य
सन्ततं च शुभगुणं मुदा ॥ समा ... ॥ १ ॥

विदू — अहमिन्दुमतीवृत्तान्तज्ञानाय प्रेषितस्सन् महता श्रमेण कलावत्या स्नेहं सम्पाद्य तयैव विदितवृत्तान्तः ईदृशव्यापारेण नितरां खिन्नोऽस्मि । वयस्यस्तु इदानीं मृगयाप्रतिनिवृत्तः कृताह्निकव्यापारः कुत्र वेति न जानामि । (इति चिन्तयन् स्थितः ।)

(पुरो विलोक्य, सहर्षम्) इत एक एवाभिवर्तते प्रियवयस्यः । (निरूप्य) चिन्ताक्रान्त इवायम् लक्ष्यते । भवतु, सर्वं ज्ञास्यामि । इत्यशक्तिमभिनीय स्थितः ।

सू — एवं विदूषकप्रवेशानन्तरं चिन्ताकुलो रघुनन्दनः प्रविशति —

दरु ।

श्रीमानेति रघुतनयोऽयं
श्रितजनशुभदाता । ॥ श्रीमान् ॥

कामं चित्ते तां नृपतनयां
कलयन्निह खलु [1] नरजनपाता ॥ ॥ श्रीमान् ॥

चिन्तालोलतया त्यक्त्वा
चिरधैर्यं च तया ।
सन्ततमतिकृशतनुरपि चित्रम्
सकलजनाक्षिप्रेमसत्पात्रम् ॥ ॥ श्रीमान् ॥ १ ॥

राजा — कामं विदर्भतनयां मय्यनुरक्तां नृपांश्च खलु विषमान् ।
श्रुत्वा मनो मदीयं कौतुकचिन्ताब्धिमग्नमद्यास्ते ॥ ३४ ॥

किमत्र करणीयम्? (विमृश्य) विक्रमबलेन सर्वं समीकरिष्ये । कथमद्यापि चिरायति मे नर्मसचिवः ताण्ड्यायनः? (पुरो विलोक्य, सहर्षम्) अयमितस्तिष्ठति ।

विदू — (उपसृत्य) जयतु जयतु महाराजः ।

रा — प्रतिगृहीतं ब्राह्मणवचनम् । सखे, किं श्रान्त इव लक्ष्यसे?

विदू — सर्वं भवतैव ।

रा — कथमेवं वदसि? महत्कार्यसाधनं त्वया कर्तव्यम् ।

---

1 'नरपाता' इत्येवालम् । जनशब्दः मूलकोशस्थोऽपि आम्रेडित इति भाति ।

विदू— किं लड्डुकखण्डभक्षणम् ?

रा— (विहस्य) नहि नहि । अभ्यवहारासक्तं तव हृदयम् । मम तु विदर्भसुतामनुसृत्यात्र विक्लवं चेतः क्व नु कथं विनोदयामि ।

विदू— वयस्य, कथमद्यापि ते चिन्ता ?

रघु — कथमिव?

विदू —
अन्यत्र हीन्दुमत्या हृदयं नासक्तमेव च त्वयि तु ।
दृढलग्नं कलयन्ती कलावती सैव साधयेत्सकलम् ॥ ३५ ॥

रघु — कथं कलावत्या मयि स्नेहानुबन्धः ?

विदू — (सरोषमिव) अये, आत्मगुणावमानिन्, श्रूयताम् —

सौन्दर्यं पटुतार्जवं तरुणता सौभाग्यमोजस्विता
धीरत्वं च कुलीनता सरलता सत्कीर्तिता दातृता ।
औचित्यं प्रियवक्तृताऽपि च महद्भावः प्रभुत्वं तथा
कस्मिन्नस्ति सदा यदेतदखिलं लोके विना त्वां प्रभो ॥ ३६ ॥

तत एव स्नेहानुबन्धः ।

रघु — वयस्य, तत्र तावत् को वृत्तान्तः ? कीदृशी प्रिया ?

विदू — तत्र तावत् मत्स्ययन्त्रवेधनपणसत्त्वेऽपि तवैव कन्या देयेति सर्वेषामभिलाषः । त्वद्गत-चित्तवृत्तिरिन्दुमती राज्ञान्तर्गृहमेव रक्ष्यते ।

रघु — वयस्य, तत्र किं कारणमिति जानासि किम् ?

विदू — जानामि ।

रघु — तर्ह्युच्यताम् ।

विदू— "रघुकुमारासक्तहृदया इन्दुमती पणनिर्वहणेऽप्यस्माकं सुलभा न भवेत्, तस्मात्सर्वे वयं मिलित्वा चोरवृत्त्या तां गृहीत्वा गच्छामः" इति स्वयंवरागतराजकुलालोचनां ज्ञात्वा एवं कृतम् ।

रघु — साधु, साधु, वयस्य, कथं मे प्रियादर्शनं भवेत् ?

विदू — दर्शनं तावदुपायेन साध्यं भवेदेव । तद्बहिरानयनमतीव दुर्घटम् ।

रघु — कुतः ?

विदू — राजा तु तामन्तर्गृहे निवेश्य, "मदीयाङ्गुलीयकदर्शने सति एषा बहिर्मुच्यताम्" इति तद्गृहद्वारपालानाज्ञप्तवान् । अत एव —

रघु — (सहर्षम्) इतस्तदङ्गुलीयकम् (इति विदूषकाय दर्शयति)

विदू — (साश्चर्यम्) वयस्य, कथं त्वयैतल्लब्धम् ?

रघु — मृगयासमये चोरहस्तात् ।

विदू — दिष्ट्या चोरेणाप्युपकृतं वयस्यस्य । इदानीं सुसाध्यमेव प्रियाया बहिरानयनम् । तद्दर्शनोपायस्तु विचिन्तनीयः ।

रघु — विचिन्त्यतां तत्रोपायः ।

विदू — (चक्षुर्निमील्य, ध्यानं नाटयति ।)

रघु — सुसाध्यमित्यानयनं यदोच्यते तस्यास्तदाश्वासितमस्ति मे मनः ।
तद्दर्शनं ते घटते कथंन्विति श्रुत्वा वचो मुह्यति किं करोमि ॥ ३७ ॥

विदू — (राजानं प्रति, सनिर्वेदमिव) किमनेन परिदेवितेन मम ध्यानभेदनं कुरुषे ?

रघु — नहि, नहि, विचिन्त्यतामुपायः ।

विदू — (पुनर्ध्यानं नाटयन्, सहर्षम्) चिन्तितः प्रियादर्शनोपायः ।

रघु — कथमिव ?

विदू — वयस्य, तामेव हृदि ध्यात्वा निद्रां भजसि चेत्, स्वप्ने सुलभदर्शना भवेत् । अथवा चित्रे वा लिखित्वा तां पश्य ।

रघु — वयस्य, श्रूयताम् —

तदीयचिन्ताहृतमानसस्य स्वप्ने प्रियादर्शनकारिणी मे ।
निद्रा तथा चित्रविलेखने स्यादैकाग्र्यमप्यद्य सखे कथं वा ॥ ३८ ॥

विदू — इयानेव मम कार्यचिन्तने विभवः ।

रघु — वयस्य, इयानिव किं पर्याप्तिं कथयसि ? त्वमेव गतिर्मेऽद्य कार्यसाधने ।

विदू — पीड्यते मे हृदय (मुदरं) क्षुधा । ही, ही ! तदपि विस्मृतम् । भवतु । कार्यसाधनाय गच्छामि । दीयतामङ्गुलीयकम् । (इति तद्गृहीत्वा, वेगान्निष्क्रम्य, पुनः प्रविष्टः ।)

रघु — किं वेगादायातोऽसि ? कुत्र प्रिया ?

विदू — (सक्रोपमिव) किं कुत्र प्रियेति ? सा तत्र सन्नद्धा प्रतीक्षते वा गमनमात्रेणानेतुम् ?

रघु — सखे, मुच्यताम् । वेगादागतोऽसीत्युक्तम् । तदुच्यतां को वृत्तान्तः ।

विदू — सर्वशुभावह एव ।

रघु — कथमिव ?

विदू — सा कलावती इष्टदेवतार्चनव्याजेन उद्यानवनमानेष्यति ते प्रियाम् ।

रघु — उज्जीवितोऽस्मि ।

विदू — तदेतन्नन्दनवनैकदेशं विदर्भमहीपान्तःपुरारामं प्रविश्य तदागमनं प्रतीक्षावहे ।

(उभौ प्रवेशं नाटयतः ।)

विदू — तदेतत् ।

रघु — (आराममालोक्य) अयं खलु —

मल्लीयेलावरपिप्पलीपरिलसत्ताम्बूलिकासल्लता-
श्लिष्टैरार्द्रलवङ्गचन्दनलसत्पूगादिभिस्सद्द्रुमैः ।
सम्यक्संघटितालवालवलयैः पंक्त्या समारोपितैः
पश्याभाति महीरुहैरतितरामाराम एषोऽद्भुतः ॥ ३९ ॥

वयस्य कार्यार्थमत्रागतेनापि मया न साधु समर्थितम् । अत्र हि —

[1] पुष्पास्त्रः खलु निर्घृणः सुमरसास्वादातिलोलस्वन-
न्मत्तालयावलिशिञ्जिनीरवमसावुत्पादयन्भीकरम् ।
तन्वन्कोकिलकूजिताट्टहसितं वासन्तिकाकुड्मलान्
तीक्ष्णाग्रान् स्वशरान् रुषा मयि रयात्सन्धातुमीष्टे भृशम् ॥ ४० ॥

किं करोमि ? (इति साङ्कम्पं भीतिं नाटयति ।)

विदू — (सपरिहासम् राजानमवलम्ब्य) सखे, मा भैषीः । सत्वरमनेन दण्डकाष्टेन सर्वानपि वासन्तिकाकुड्मलानलिकुलं च विध्वंसयामि ।

रघु — (स्पर्शं नाटयन्) हन्त ! हन्त ! अयं हि

1 पद्यम् ।

मलयगिरिपटीरारण्यकुञ्जाधिवासी
परिचितफणिराजान्युग्रफूत्कारभीमः ।
प्रमथितपथिकौघो दुर्निवारस्समीरो
विवशयति निकामं पातकी मानसं मे ॥ ४१ ॥

( इति मोहं नाटयति । )

विदू — हा ! धिक् ! मोहितो वयस्यः । किंकरोम्यहं मन्दभाग्यः । तदानीमेव मयोक्तमुत्तरीयाच्छादनेन वारय समीरमिति । तन्न श्रुतं वयस्येन । क इदानीं चिकित्सोपायः ? ( उपसृत्य ) वयस्य इतस्तावत्प्रिया —

रघु — ( ससंभ्रमम् ) कुत्र तावत्प्रिया ?

विदू — सत्यं भ्रान्तोऽसि । अहमतिचिरपरिचितोऽत्र वर्ते खलु किं तया प्रियया ?

रघु — मैवं भाणीः ।

[1]मनसिजशबरास्त्रायितचूतस्तबकादिसंगवित्रस्तः ( वित्रसतोः ) ।
मत्दृक्चकोरयोस्तद्वदनेन्द्वनुभोगतोऽन्य(स्ति)शरणं किम् ॥ ४२ ॥

वयस्य , किं करोमि ? कुत्र वा यास्यामि ?

विदू — महानसमेव प्रविशावः ।

रघु — अये, क्षुधितस्य तव तावत्तत्र तृप्तिर्भवेत् । मम प्रियादर्शनादेव ।

विदू — किं मामुदरम्भरिं मन्यसे ?

( नेपथ्ये )

कस्सन्देहः ?

रघु — केयं तवोदरम्भरित्वसाधनचतुरा उपश्रुतिः ?

( पुनर्नेपथ्ये )

सखि ! इन्दुमति ! कस्सन्देहस्ते ' मद्विषये स रघुनन्दन उत्कण्ठितो वा ' इति ?

रघु — ( श्रुत्वा, सहर्षम् ) सखे ! कलावत्या सह इत एवागच्छतीव प्रिया ।

विदू — भवतु ! ज्ञास्यावः ।

( पुनर्नेपथ्ये )

---

1 पद्यम् ।

सखि शृणु तावत् प्रियसुहृद्विदूषकोक्तं वचनम् । यथा वा —

शश्वद्विभाव्येन्दुमतीं हृदब्जे कामं कृशाङ्गो रघुनन्दनोऽसौ ।
जागर्त्यनासक्तहृदन्यकार्ये रात्रिन्दिवं तद्गतचिन्तयैव ॥ ४३ ॥

रघु — सत्यमेवमेवास्मि ।

( नेपथ्ये )

हला ! आश्वासितमिव मे हृदयम् ।

रघु — अहो ! कर्णामृतमिव प्रियाया वचनम् ।

( नेपथ्ये )

कलावति, कुत्र तावत् तत्प्रमदवनम् ? इन्दुमति, इदमेव तत् । प्रविशावः इष्टदेवतार्चनाय ।

रघु — वयस्य, अत्रैते आगच्छतः । तदावां क्वचिदन्तरितावेवानयोर्विस्रब्धवचनानि श्रोष्यावः ।

( तथा कुरुतः । )

सूत्र — तत इष्टदेवतार्चनव्याजेनात्मानं रघुनन्दनस्य दर्शयितुमानयन्त्या कलावत्या सह इन्दुमती प्रविशति ।

दरु ।

सख्याभ्येति सहितेन्दुमती ।
साखिलशुभनिधिरत्र ॥

सदलङ्कारा सरसाकारा
सादरमम्बुजवक्त्रा ॥ ॥ सख्या ॥

सकलगुणाढ्या साधुजनेड्या
अकलितसुकृतदुरापा ।
मदगजगमना महिमास्थानं
मदनवधूसमरूपा ॥ ॥ सख्या ॥

इन्दु — सखि, कुत्र तावत्तदम्बिकायतनम् ?

रघु — ( सहर्षाश्चर्यम्, इन्दुमतीं नेत्राभ्यां पिबन्निव विलोक्य, विदूषकं प्रति ) वयस्य, अहमिदानीं —

सर्वस्वं कुसुमायुधस्य महतोऽखण्डं फलं श्रेयसः
भृङ्गारस्य च जीवितं हि विषयानन्दस्य कन्दं परम् ।
सौन्दर्यातिशयस्य सार इह मे साम्राज्यचिह्नं दृशो-
रेषा गोचरतां प्रिया यदगमद्धन्यः कृतार्थोऽस्मि तत् ॥ ४४ ॥

अहो ! अवयवसौष्ठवमस्याः ! पश्य तावत् —

संराजत्स्मितशोभिगण्डफलकं फालातिलोलालकं
कर्णान्तायतनेत्रमुन्नमिदं वक्त्रं मनोज्ञप्रभम् ।
पीनोत्तुङ्गपयोधरोज्ज्वलमुरो मध्यः कृशः पीवरा-
वूरूचातिबृहन्नितम्बरुचिरौ पादावजिह्मांगुली ॥ ४५ ॥

( विभाव्य ) सर्वावयवैरप्यनुपमैषा । तथा हि —

औपम्यं मुखमण्डलस्य भजते नास्याः कलङ्की विधुः
राजन्नेत्रयुगस्य काममुदयग्लान्यम्बुजं तत्पुनः ।
गात्रस्यापि तडित्क्षणद्युतितया पीनोन्नतोरोजयो-
र्युग्मस्यापि च चक्रवाकमिथुनं विश्लेषि नक्तं यतः ॥ ४६ ॥

( सचमत्कारम् )

अस्या वक्त्ररुचिं निरीक्ष्य [1] त्रपया चन्द्रः परं क्षीयते
माहात्म्यं च दृशोर्निशम्य शफराः प्राप्ता वनं सत्वरम् ।
सौन्दर्यं रतिवल्लभोऽपि विमना दृष्ट्वा गतोऽनङ्गता-
मब्जौघो जलदुर्गवासमगमद्भीतोऽङ्घ्रिशोभाजितः ॥ ४७ ॥

तदेनां निर्निमेषमालोकयन्नयने कृतार्थयामि ।

विदू — अहमपि कलावती करस्थमुपायनम् ।

( इति पश्यन्तौ स्थितौ । )

---

1 अस्या वक्त्ररुचिं निरीक्ष्य तु परं चन्द्रो ह्रिया क्षीयते । इति चेत् वृत्तभङ्गः परिहृतो भवेत् ।

कलावती — इदमेव तदम्बिकायतनम् ।

इन्दु० — (विलोक्य, साञ्जलिबन्धम्, अम्बिकां प्रति)

सर्गादिहेतुलीलां स्वर्गालयभव्यदानरतशीलाम् ।
भर्गामोदनलोलां दुर्गां त्वां नौमि विनमदनुकूलाम् ॥ ४८ ॥

(इति प्रणमति ।)

रघु० — अहो मधुरपदानिबन्धनचातुर्यमस्याः !

सरसार्था वाग्रुचिरा सरलपदविन्यासमञ्जुला च वरा ।
अथवा किमीदृशेषु प्रभवति नाकृतिविशेषेषु ॥ ४९ ॥

इन्दु० — उपहारार्चनोपकरणमुपायनं च ।

कला० — इत एतत् । (इत्यर्पयति ।)

इन्दु० — (नाट्येनार्चननिवेदनप्रणामादिकं कृत्वा, साञ्जलिबन्धं प्रार्थयति ।)

पार्वति परशिवतन्ववलम्बे
पालितसकलप्राणिकदम्बे ।
पूरय कामं मेऽम्ब शुभास्ये
पूजां तेऽहं पुनरपि दास्ये ॥ ५० ॥

रघु० — कीदृशः कामोऽस्याः ?

विदू० — परस्तात् ज्ञायताम् ।

कला० — (अम्बिकां प्रति)

मम सखी सती मन्मथाकृतिं
तमजभूपतिं तत्परा पतिम् ।
भजतु सेवया भर्गपत्नि ते
स्वजन काम्यदे स्वर्गिसन्नुते ॥ ५१ ॥

विदू० — अपि श्रुतं वयस्येन ?

रघु० — नैतत्पर्याप्तम् ।

इन्दु० —(सख्या सहाम्बिकां प्रणम्य, किञ्चिदन्तरं गत्वा, मदनबाधां निरूप्य) सखि, पूर्वमेव प्रियविषये कृतबाधो मदनः इदानीं तस्य विशेषस्मरणेन मां नितरां बाधते । तत्किं करोमि ?

6

कला० — सखि, अत्र मल्लिकालतावेष्टनप्रच्छायशीतले स्फाटिकवेदिकालंकृते रसालतरुमूले क्षणमुपविश। समाश्वासयामि त्वाम् ।

इन्दु० — (उपविश्य) सखि प्रियप्राप्तिमन्तरा कथं नु खलु मे समाश्वासनं भवेत् ?

रघु० — अवसरोऽयमात्मानं दर्शयितुम् ।

विदू० — मा त्वरस्व । क्षणं वीक्ष्यताम् ।

इन्दु० — (विरहवेदनामभिनयति ।)

पदम् ।

क्षणमपि न सहे तमिमं खेदं
क्षपिताति (तिं) विनोदम् ॥

भण सदुपायं किन्नु करोमि
भद्रमयि सखि क्व नु वा यामि ॥

मलयमरुन्मयि स किरति विदयो
ज्वलनकणानिव यो ।
[1] जल इह विधुरपि तीव्रकरचयो
दलति सदा मां काममविनयो ॥ ॥ १ ॥

तिलकरसालतरुपटलेऽति-
तीव्रतरं नदती ।
बलवदलिपिकपटलीयं श्रुति-
बाधां नितरां मे वितनोति ॥ ॥ २ ॥

मनसिजहतकः समयोऽयमिति
मामिषुभिस्तपति ।
अनवरतमपि हृदयमाकुलयति
अजनृपस्स मां किं वा स्मरति ॥ ॥ ३ ॥

रघु० — (सहसोपसृत्य, इन्दुमतीं प्रति)

---

1 जल = जड, डलयोरभेदः ।

किं वा स्मरति नृपो मामिति ते सन्देह उचित एव भृशम् ।
त्वद्गतचित्ततयाऽहं कामं विवशः प्रियेऽस्म्यनिशम् ॥ ५२ ॥

इन्दु० — (राजानं निरीक्ष्य, अपवार्य)

स्वप्ने तु यादृशो दृष्टो यादृशो मे हृदम्बुजे ।
वर्ततेऽयं स एवात्र चक्षुर्गोचरतां गतः ॥ ५३ ॥

(इति सहर्षाश्चर्यभीतिलज्जम् उत्तिष्ठति । )

रघु० — प्रिये अलमुपचारेण ।

कला० — स्वागतम् । अपि कुशलं महाराजस्य ?

रघु० — कुशलमेव विशेषतो युवयोर्दर्शनेन ।

कला० — महाराज, इदं पाद्यम् । इदमर्घ्यम् । इदं फलम् ।

रघु० — (सस्नेहं प्रतिगृह्णाति । )

विदू० — (उपसृत्य, सक्रोधमिव) किमयं जनो भवत्योर्ब्राह्मण इव न रोचते ?

कला० — आर्य क्षम्यताम् । सखि, इन्दुमति ! उपहरोपायनं ब्राह्मणाय ।

इन्दु० — (उपसृत्य, विदूषकहस्ते ददाति)

विदू० — (प्रतिगृह्य) किं न मां प्रणमसि ?

इन्दु० — (प्रणमति)

विदू० — स्वस्ति भवत्यै । मनोरथलाभेन युज्यस्व ।

रघु० — (इन्दुमतीमुपसृत्य) अपि कुशलं प्रिये ?

इन्दु० — (सभयलज्जमवनतमुखी तिष्ठति । )

रघु० — नमयसि किमद्य कान्ते नवपरिफुल्लाब्जकोमलं वदनम् ।
दीनं मां त्वं म(ह)र्षय पश्य मुदोन्मस्तकीभवन्मदनम् ॥ ५४ ॥

(इतीन्दुमतीमुखमुन्नयितुमिच्छति । )

इन्दु० — (नाट्येन वारयति । )

(नेपथ्ये)

अयि कलावति ! नारदमहर्षिपादारविन्दवन्दनाय महाराजो वसमानेष्यति । ततः पूर्वमेव त्वरयेन्दुमतीम् ।

कला० — (श्रुत्वा) मत्सखी वकुलावलीव मां त्वरयति ।

रघु०— (सनिर्वेदम्) अहो! विघ्नवत्योऽर्थसिद्धयः । नारदमहर्षिणाऽपि प्रतिकूलमाचरितम् । भवतु, तथापि तदागमनमनुकूलायैव भवेत् ।

कला० — महाराज! परवशः खल्वयं जनः ।

रघु०— तर्हि साध्यताम् यथेच्छम् । समये स्मरणीया वयम् ।

इन्दु०—(विश्लेषखेदं नाटयन्ती कटाक्षेण रघुनन्दनं सम्भावयन्त्येव ससखी निष्क्रान्ता ।)

रघु० — वयस्य! अल्पपुण्योऽस्मि ।

विदू०— कीदृशं तेऽल्पपुण्यत्वम्? दर्शनमात्रेण सा तेऽङ्कं नारूढेति वा?

रघु०— नहि, नहि ।

विदू० — किं तर्हि?

रघु०— शृणु तावत् ।

विततकमलपत्रात्यायतोद्भासि नेत्रं
स्फुरदधरविराजद्वक्त्रमस्याः प्रियायाः ।
विमलतरमुदञ्चन्मन्दहासातिरम्यं
कथमपि च मया तद्वीक्षितं यन्न सम्यक् ॥ ५५ ॥

वयस्य । प्रियाविरहकातरं मे मनः कथं विनोदयामि? (पुरोऽवलोक्य) हन्त! हन्त! कृच्छ्रात्कृच्छ्रतरमापतितम् । यतः —

अशरणमिह चेतो मे प्रियाऽसन्निधानात्
प्रथममपि सुमास्त्रो निर्घृणस्संक्षिणोति ।
विधुरयमपि तीव्रैरंशुजालैस्स्फुलिङ्गा-
नहह मयि निकामं पश्य वर्षन्नुदेति ॥ ५६ ॥

(सवितर्कम्)

प्रच्छन्नाग्निकणैः करैरतितरां तीव्रश्शठोऽयं विधुः
पान्थानां निवहं तपत्यतिरुषा शश्वद्भृशं निर्दयः ।
लोकस्तावदमुं कलङ्कनिलयं मूढः कथंन्वीदृशं
कामं शीतकरस्सुधांशुरिति च प्रीत्या प्रशंसत्यहो ॥ ५७ ॥

( खेदमभिनीय , सभयकम्पम् )

[1] भृशमपि मयि रुष्टो रन्ध्रविद्राजभावा-
सह इव कृतलक्ष्मव्याजकाकोलमङ्कः ।
इह खलु किरणैस्स्वैर्निर्घृणोऽतीव तीव्रै-
र्विदलति च मदङ्गं काममप्येष राजा ॥ ५८ ॥

वयस्य ! तदिदानीं किं करणीयम् ?

विदू०— उपायनमेतद्भक्षयावः ।

रघु०— अहो, ते सर्वत्राप्युदरम्भरिता !

विदू०— वयस्य अत्रागतयोरावयोर्महान् समयोऽतिक्रान्तः । तदावामस्मदीया अन्वेषयेयुः ।

( नेपथ्ये )

स श्रीमान् रघुभूमिपालतिलकस्सर्वैस्समं बन्धुभि-
र्विज्ञप्तो विनयात्स्वयंवरसभां प्राप्तुं नृपेणामुना ।
सन्नाहं कलयन् वसिष्ठसहितोऽमात्यैः परीतो महा-
नायुष्मन् भवदागमे वितनुते ह्यद्य प्रतीक्षामसौ ॥ ५९ ॥

रघु०— वयस्य ! तातो मां प्रतीक्षत इति एष सुमन्त्रो मन्त्रिसत्तमो वदति । तदेहि, शीघ्रमेव गच्छावस्स्वयंवरसाधनाय । ( इति निष्क्रान्तौ । )

सूत्र०— एवं तन्निष्क्रमणानन्तरं स्वयंवरसभावृत्तान्तवर्णनाय वन्दियुगलं प्रविशति ।

दरु ।

वन्दियुगलमेति ।
विदर्भ नृपति- ॥ वन्दि ॥

करतलविलसत्काञ्चनवेत्रं
कामं कलितनृपौघस्तोत्रम् ।
निपुणं प्रेष्यजनोचितवेषं
नितरां मिथो वर्धिततोषम् ॥ ॥ वन्दि ॥

एकः — रैवतक ! किं मन्दमागच्छसि ? त्वरस्व तावत् ।

---

१ पद्यम् ।

द्वितीयः— अये मन्दारक ! अहमित आगच्छामि ( इति त्वरितं प्रचलति । )

मन्दा० — ( निरीक्ष्य, सोपहासम् )

ताडयत्यूरुयुगळं चलतोऽनुपदं च ते ।
किमेतल्लम्बमानं च महत्प्रचलितांशुकम् ॥ ६० ॥

रैव० — सम्पत्कोश एषः ।

म० — किन्तु तवैव सम्पदा वा ।

रैव० — ( सक्रोधम् ) तर्हि तवापि वा ?

म० — भवतु, त्वमेक एवानेन सम्पन्नो भव ।

रैव०— वयस्य । माऽसूयां कुरु । तवाप्येवं भवतु ।

म० — सखे, नायं परिहाससमयः । महद्राजकार्यमनुष्ठेयं खल्वावाभ्याम् ।

रैव०— किं तत् ?

म०— इदानीमाज्ञप्तं खलु महाराजेन — 'अये वन्दिनौ ! युवां स्वयंवरसभां गत्वा ये ये राजानः आगतास्तान्निरीक्ष्य यन्त्रवेधनाय प्रेरयतम्' इति ।

रैव० — विदितमिदानीम् । मन्दारक, अमी राजानस्सर्वे मिलित्वा भर्तृदारिकां चोरवृत्त्या गृहीतुमिच्छन्तीति श्रुतं किल ? तत्किम् ?

म०— तदिदानीं न घटते ।

रैव० — कुतः ?

म०— अद्य तावन्नारदमहर्षिर्वत्सायाः एतदर्थमेव किमपि मन्त्रमुपदिष्टवान् । तत्प्रभावेण राजानः क्रूरबुद्ध्या तत्समीपं गन्तुमपि न शक्ताः ।

रैव०— महाप्रभावः खलु महर्षिः । अथाप्यस्य महर्षेरत्रागमने का प्रसक्तिः ?

म० — स्वभाव एवास्य । अयं हि—

एतद्देशरहस्यमन्यनगरे तत्रत्यमत्र क्षणात्
स्वर्लोकस्थमिहावनौ प्रकटयन् भूमेश्च वृत्तं दिवि ।
तत्तद्देशभवद्रहस्यसदृशोपायं च कुर्वन्मुदा
सर्वत्रापि चरत्यजस्रमुदयत्कण्डूर्तजिह्वो मुनिः ॥ ६१ ॥

विशेषतो रघुनन्दनपक्षपात्ययं तदर्थमेवाद्यागत इति मन्ये ।

रैव० — साधु ! साधु ! प्रकृत्या निपुणः खलु रघुनन्दनः । स एवास्मद्राजजामाता भवेद्वा ।

मन्दा० — कथं वा भवितव्यता ।

रैव० — भवतु । केदानीं स रघुनन्दनः ?

म० — इदानीं महाराजेन आहूतस्वजनकेन सह सभामागच्छेत् ।

रैव० — तर्ह्यस्मद्राजाप्यागच्छेद्वा ?

म० — न केवलं राजा । सर्वमप्यन्तःपुरमत्रागमिष्यति ।

रैव० — त्वर्यतां सखे राजाज्ञानुष्ठानाय । (इति सभाप्रवेशं नाटयतः ।)

म० — (पुरो निर्दिश्य) । एषा हि —

दीव्यद्रत्नविचित्रकाञ्चनमयस्तम्भावळीशोभिता
नानालङ्कृतराजमानवलभिप्रालम्बिमुक्तावलिः ।
पङ्क्त्या यन्त्रितदीप्रदीपघुटिकाचित्रैर्वितानैस्तता
दिव्यैरास्तरणैस्स्वयंवरसभा संराजतेऽत्यद्भुता ॥ ६२ ॥

अत्र खलु —

सद्रत्नोज्ज्वलदन्तिदन्तशकलश्रेष्ठप्रक्लृप्तोल्लस-
न्मञ्चावल्युपरि स्थिताः प्रविलसद्भूषाविशेषोज्ज्वलाः ।
नानादेशनिवासिनो नृपतयो राजन्त्यलं कौतुका-
दुद्ग्रीवाश्चलयन्त्रमेतदनिशं संवीक्षमाणा अमी ॥ ६३ ॥

रैव० — सखे ! क एषः विचित्रालङ्कारपरिमण्डितस्समाबद्धपरिकरः यन्त्रवेधनधृतत्वर इव लक्ष्यते ?

म० — अयं विराजत्कुन्तलो कुन्तलदेशालङ्कारः कुन्तलापीडनामा ।

रैव० — कोऽसौ भुजगपतिभोगोपमबाहुरुन्नमितस्कन्धः मुहुरालोकयन्नास्ते ?

म० — अयं हि काश्मीरतिलको नाम काश्मीरदेशाधिनाथः ।

रैव० — क एष अतिगम्भीराकृतिः कमलदलकोमलेक्षणो भृशमितो विलोकयति ?

म० — अयं तु अतिचित्रतरप्रतापः प्रतापशेखरो नाम मगधदेशाधिपतिः ।

रैव० — अयं पुनः कः मौर्वीकिणाङ्कितकरः, अतिधीरः सभामवलोकयन्नास्ते ?

म० — एष खलु आश्रितजनबन्धुरिसन्धुदेशाधिपस्समरधुरन्धरो नाम ।

रैव० — क एषः विशालोन्नतवक्षस्थलः विचित्रतराङ्गदघटितांसः पुरस्ते वर्तते ?

सूत्र० — सर्वजननयनलोभनीयमूर्तिः कीर्तिमान्नाम केकयेश्वरः ।

रैव० — कुतस्तावत्स रघुनन्दनः ?

(नेपथ्ये)

वयस्य रघुनन्दन ! इत इतः ।

रैव० — (कर्णं दत्वा) सखे ! कोऽयमालपति ?

म० — (निरीक्ष्य) अहो ! त्वया पृष्टमात्र एवायं रघुनन्दनस्सवयस्य इत एवाभिवर्तते । तदावां किञ्चिदपसरावः ।

सूत्र०— एवं मन्दारकेन निर्दिष्टः पर्युत्सुकमना रघुनन्दनः प्रियसुहृदा कीर्तिनिधिना सह प्रविशति ।

दरु 1

रतिरमणरम्यतनुराश्रितजनाति-
रविकरो रघुवरनु रत्र खलु सुकृती ॥
सति समाजे महति सत्वरमुदेति ॥ रति ॥

सकलनरनुतपादसरसिजस्सुहृदा
साकं च सन्मोदसाधकोऽतिमुदा ।
विमलभूषणभूरिविलसितो हारी
विमतभित्सुरपुरीविविधोपकारी ॥ ॥ रति ॥

रघु०— (सानुस्मरणम्) वयस्य ! सख्या सह प्रमदवनात् प्रस्थाने तया ।

मयि खलु [1]त्रपया सव्याजमावृत्य कण्ठं
मुहुरपि मृदु यान्त्या कान्तया प्रेरिता ये ।
प्रणयमधुरमुग्धस्निग्धनिष्पन्दताराः
किमपि हृदि मदीये तन्वते ते कटाक्षाः ॥ ६४ ॥

वयस्य, कदा कथं वा पुनरपि तां मृगलोचनां पश्यामि ?

कीर्ति० — वयस्य किमस्थाने कातरोऽसि ? अद्य तावत्साधितयन्त्रवेधनस्य तव परिसरं माला-विभूषितहस्ता प्रिया आगमिष्यति खलु ।

---

1 अत्र वृत्तभङ्गो दृश्यते । "सविलज्जव्याजमावृत्य" इति वृत्तभङ्गः परिहर्तुं शक्यः । (संपादकः)

रघु० — सखे, बद्धवैरेषु राजबृन्देषु कथं मयैव यन्त्रवेधनम् ?

कीर्ति० — कस्सन्देहस्तेऽत्र ?

अस्तु राजकुलमत्र सत्वरं किं भविष्यति च तेन सांप्रतम् ।
वीरवर्य झषयन्त्रवेधने त्वां विना जगति दक्षिणोऽस्ति कः ॥ ६४ ॥

रघु० — तर्ह्यादेशय मार्गम् ।

कीर्ति० — महाराज, इत इतः ।

( इत्युभौ सभाप्रवेशं नाटयतः )

कीर्ति० — ( परितो निरीक्ष्य ) वयस्य ! अत्र तावन्नानादेशराजाः पूर्वमेवागत्य वसन्ति ।

रघु० — किमेतैर्वद्धवैरैः ।

रैवतकमन्दारकौ ०— ( उपसृत्य समर्यादम् ) विजयतां रविकुलचूडामणिर्युवमहाराजः । इदं वरार्हमासनमास्यताम् ।

कीर्ति० — ( अपवार्य ) वयस्य, एतद्वचने वरस्यार्हमिति व्युत्पत्त्या प्रकृतोचितं शकुनं सूचितम् ।

रघु० — भवितव्यता बलवती हि ।

( इति यथोचितमुपविश्य, दक्षिणबाहुस्पन्दनं सूचयित्वा ) वयस्य,

स्पंदते दक्षिणो बाहुः कार्यसिद्धिं वदन्निव ।
विलम्बासहमेतन्मे तथापि तरलं मनः ॥ ६५ ॥

( नेपथ्ये )

भो भो रैवतकमन्दारकौ !

सन्नद्धाश्चलयन्त्रवेधनविधौ तिष्ठन्तु सर्वे नृपाः
कल्याणोचितमण्डनं च सुतरां सर्वत्र चाज्ञाप्यताम् ।
राजाप्यत्र वसिष्ठसंयुतरघुक्ष्मामण्डलाधीश्वरं
सम्मान्याद्य मुदा सनारदमुनिस्ताभ्यां सहाभ्येत्ययम् ॥ ६६ ॥

किंच —

अन्तःपुरं चापि परं स्वयंवरं
द्रष्टुं समागच्छति कौतुकादिह ।

विज्ञाप्यतां तस्य निवास आदरा-
त्सौधोपरिष्ठात्क्रियतामिति द्रुतम् ॥ ६७ ॥

रघु०—सखे, तर्हि प्रिया अप्यागच्छेत् ?

कीर्ति०— कस्सन्देहः ?

मन्दा०— (ससंभ्रमम्) वयस्य महाराज इदानीमागच्छेदेव, यतस्संचोदयत्यावामयं प्रतीहारी भद्रसेनः । अत्र तावत्सर्वं सन्नद्धमेव वर्तते ।

(नेपथ्ये)

इत इतो भवन्तः ।

मन्दा०— (निरूप्य) इतस्समायात एव तैस्सह महाराजः । आवां किञ्चिदन्यत्र तिष्ठन्तावेव प्रतिपालयावः (तथा कुरुतः ।)

सूत्र०— ततः स्वयंवरोत्सवाय वसिष्ठनारदाभ्यां सह रघुविदर्भराजौ प्रविशतः ।

दरु ।

नरपतिवर्यौ वरगुणमहितौ ।
नतविमतौघौ परमायातौ ॥

नारदवर्यवसिष्ठाभ्यां तौ
नयविशदौ सममतिशुभचरितौ ॥ ॥ नरपति ॥

सकलजनेक्षणशुभकरवेषौ
सप्रतिहारियुतौ बहुतोषौ ।
सकलधरणीवलयविभूषौ
सज्जनतोषणलसदभिलाषौ ॥ ॥ नरपति ॥

प्रती०— इत इतो भगवन्तौ ।

(महर्षी राजानौ च सभाप्रवेशं नाटयन्ति ।)

(रघुनन्दनः कीर्तिनिधिरन्येच ससंभ्रममुत्तिष्ठन्ति ।)

रघु०— (प्रासादोपर्यवलोक्य) वयस्य ससखीजना प्रियाप्यत्रागतैव ।

अद्यैषा नवफुल्लचम्पकदलश्रीगर्वसर्वंकष-
त्विण्णालातिविराजिताङ्गलतिका प्रच्छाद(नार्थात्)नैतत्पटात् ।

हर्षादाशु विलोकनार्थमिह नस्सा निष्क्रमन्ती मुहुः
कान्ता भातितरां पयोदपटले विद्युल्लतेवोज्ज्वला ॥ ६८ ॥

विद० — ( नारदवसिष्ठौ प्रति ) इमे आसने । उपविशतामार्यौ ।

( उभौ उपविशतः )

विद० — ( रघुनृपतिं प्रति ) महाराज इदमासनमास्यताम् । ( इति हस्तेन गृहीत्वा तमासने उपवेश्य, स्वयमपि यथोचितमुपविश्य, वन्दिनौ प्रति ) भो वन्दिनौ, विज्ञाप्यन्तां सर्वे राजानः यथा वा, एतेषु राजवृन्देषु —

भूमिस्थपात्रसलिले प्रतिबिम्बितैत-
च्छायामतीव निपुणोऽत्र विलोकयन् यः ।
व्योम्नि भ्रमन्मकरयन्त्रमिदं तु तोये
तत्रैव च क्षिपति मत्तनुजापतिस्सः ॥ ६९ ॥

नारदः — प्रौढस्सङ्कल्पः ।

रघु० — उचितदर्शी खल्वयं महाराजः ।

मन्द० — भो भो सर्वे राजानः !

उत्तिष्ठत्विह यः पटुः परिकरं बद्ध्वा तु वेगान्वितो
धीरस्सोऽत्र शरासनं च सशरं गृह्णातु हस्ते पुनः ।
यन्त्रं चात्र यथा नृपेप्सितमिदं छिन्दत्विदानीं ततः
प्रीत्या पार्श्वमुपागतां नृपसुतां संप्राप्य तुष्यत्वलम् ॥ ७० ॥

रघु० — वयस्य कथमुक्तमात्र एवोच्चलितास्सर्वे नृपाः । ( इत्युत्थातुमिच्छति । )

कीर्ति० — वयस्य क्षणं विलम्ब्यताम् । एते तावद्दृष्ट्वा निवर्तन्ताम् । ( इत्युभौ पश्यतः )

मन्द्रा० — ( विलोक्य ) हन्त सर्वेऽपीदानीं —

अन्योन्यं भुजदण्डमण्डलभवत्संघट्टचूर्णीकृत-
प्रोत्कृष्टाङ्गदषण्डकुण्डलममी वेगान्मुदैवोत्थिताः ।
दृष्ट्वा केचिदशक्यमेतदिति तत् कामं प्रयत्नं परे
यावच्छक्ति विधाय यन्त्रदलनाशक्ता निवृत्ता नृपाः ॥ ७१ ॥

विद० — कथमेतेष्वेकोऽपि न पटुः, पुनरन्यः कोऽपि नास्त्यत्र किं विदग्धः ?

कीर्ति० — सखे समयोऽयं विक्रमस्य ।

रघु०— (उत्थाय प्रचलति ।)

वसिष्ठरघुनृपौ० — उत्थितः खल्वयं वत्सः ।

विदर्भ०— (विलोक्य नारदं) अहोऽस्याकृतिसौष्ठवं धीरता गमनविशेषता च । तथा हि—

विमलशशिनिभास्यः पद्मपत्राभनेत्र-
स्सुरुचिर (विततोरा) तरोरा भोगिभोगाभबाहुः ।
इममखिलनृपौघं सावहेलं च पश्यन्
कलभगमन एष भ्राजते राजसूनुः ॥ ७२ ॥

नारद०— कस्सन्देहः ?

विदर्भ०— तर्हि वयं कृतार्था एव सकन्यकाजनाः ।

मन्द०— सन्नद्धपरिकरोऽयं नृपकुलाग्रणीस्त्वरितं यन्त्रमुपसर्पति ।

वसि० — (विलोक्य ; सप्रणयम्)

धीरोऽयं रघुनन्दनोऽतिकुतुकाच्चापं विधत्ते करे

नारद० — (सश्लाघम्)

सन्धायेषुमिहातिलोलमलुनत्तन्मत्स्ययन्त्रं दिवि ।

रघु० — (साश्चर्यम्)

लूनं मूलतले पतत्यतिजवाच्चक्रभ्रमेणैव हि

विदु०— (सानन्दम्)

स्वच्छायावदिदं जले यदपतत् तत्पूर्णसन्धा वयम् ॥ ७३ ॥

(रघ्वादयस्सर्वे तं सप्रेमाश्चर्यानन्दं पश्यन्ति ।)

विदर्भ०— आयुष्मन् रघुनन्दन , इदमासनम् । आस्यताम् ।

(रघुनन्दनः कीर्तिनिधिश्च उपविशतः ।)

विदर्भ०— (प्रतीहारिणं प्रति) भद्रसेन, त्वरितमानीयतां मे वत्सा ।

प्रती०— यदेव आज्ञापयति । (इति निष्क्रम्य, पुनः प्रविश्य) महाराज , इत आगच्छति ससखी वत्सा ।

सूत्र०— ततः स्वाभीष्टसाधनाय ससखी इन्दुमती प्रविशति ।

*दरु ।

सख्याभ्येति सहितेन्दुमती ।
साऽखिलशुभनिधिरत्र ॥

सदलङ्कारा सरसाकारा
सादरमम्बुजवक्त्रा ॥ ॥ सख्या ॥

सकलगुणाढ्या साधुजनेड्या ।
अकलितसुकृतदुरापा ॥
मदगजगमना महिमास्थानं ।
मदनवधूसमरूपा ॥ ॥ सख्या ॥

इन्दु० — सखि, इत एव निर्वर्तितयन्त्रवेधनस्स मनोरथवल्लभस्तातसमीपे वर्तते । तस्मान्न पारयामि लज्जया तत्समीपमपि गन्तुम् ।

कला० — सखि, स्थाने खलु ते लज्जा इदानीं यन्त्रवेधननिश्चिते तस्मिन् पतौ ।

इन्दु० — (लज्जावनतमुखी तातसमीपमुपसृत्य) तात, प्रणमामि । (इति तथा करोति ।)

विदर्भ० — वत्से अभिमतभर्तृगा भव ।

इन्दु० — (वसिष्ठादीन् प्रणमति ।)

वसिष्ठः — पतिकुलनन्दिनी भूयाः ।

नारदः — सदानन्दनिर्भरा भव ।

रघुः — सच्छीलवती भूयाः ।

इन्दु० — (तातमुखमालोकयति ।)

विदर्भ० — वत्से, किं विलम्बसे । निर्वर्तितयन्त्रवेधनः खल्वयं रघुनन्दनः ।

इन्दु० — (सखीमालोकयति ।)

कला० — (अतिविचित्रतरां मालामिन्दुमतीहस्ते ददाति ।)

इन्दु० — (मालां कराभ्यां गृहीत्वा सलीलं रघुनन्दनसमीपमुपसर्पति ।)

रघुन० — (इन्दुमतीं विलोक्य सौत्सुक्यम्) वयस्य, इतस्तावत् ।

* This is merely a repetition of the Daru on page 27.

नीलाब्जविशालाक्ष्यनुकूला मम चित्तं
फालान्तिकलोलालकजाला मदयन्ती ।
सा लाल्यसुशीला खलु नालाभकुचैषा
बाला धृतमाला गजलीलानिधिरेति ॥ ७४ ॥

कीर्ति० — वयस्य,

प्रथममपि कटाक्षस्तोमनीलाब्जमाला-
ततिपरिकलितेऽपि प्रीतितन्तेऽत्र कण्ठे ।
पुनरपि [1] दयितैपान्यन्मधूकस्रजं सा
कलयतु नमय त्वं सादरं मौलिमाशु ॥ ७५ ॥

रघुन० — (मौलिमवनमयति ।)

इन्दु० — (भुजावुन्नमय्य रघुनन्दनकण्ठे सादरं मालामाकलयति ।)

रघुन० — (निर्वर्ण्य) एषा हि

कुचकुम्भनुन्नसिचयं हस्तावुन्नम्य सादरं मालाम् ।
मम कण्ठे कलयन्ती प्रिया किमप्यद्य कौतुकं तनुते ॥ ७६ ॥

नारदः — (आकाशे निरीक्ष्य, साश्चर्यम् रघुविदर्भौ प्रति)

खे कुर्वन्ति च पुष्पवर्षममरा वां वत्सयोरुत्सवे
रम्भाद्यप्सरसां गणो वितनुते नृत्तं मनोज्ञं परम् ।
गन्धर्वाः खलु वादयन्ति कुतुकात् भेर्यादिवाद्यान्यलं
घुष्यन्मद्दलतालवेणुमधुरं गायन्त्यमी किन्नराः ॥ ७७ ॥

वसिष्ठः — विदर्भराज, किमिति विलम्ब्यते । अस्मिन्नेव शु॰ मुहूर्ते भवतु वत्सयोः पाणिग्रहण-महोत्सवोऽपि ।

विदर्भ० — भवद्भ्यो यथा रोचते ।

(नेपथ्ये)

नानादेशनिवासिनस्तु नृपतीनस्मान् भृशं मानिनः
संराजद्भिभवान् स्वयंवरमिषादत्रानयंस्त्वं वृथा ।
दर्पेणाद्य विदर्भ भूर्यजमिमं सम्मानयन् दुर्मते
किं वेत्थं परिहासमद्य कुरुषे नो विक्रमं चाविदन् ॥ ७८ ॥

---

1 'दयितैपान्यां मधूकस्रजं सा' इति चेत्साधु ।

( सर्वे आकर्णयन्ति । )

विदर्भ० — अहो यन्त्रवेधनाशक्तानामपि रघुनन्दनसम्मानजनितामर्षाणां नृपापशदानामीर्ष्या !

वसिष्ठः — कीदृशं तावत्तेषां विक्रमम् ?

रघुः — इदानीं यन्त्रवेधने तत्स्पष्टमभूत्किल ।

रघुन० — (अपवार्य) वयस्य किं मामजमिति परिहसन्त्येते आत्मानभिज्ञाः ?

कीर्ति० — क्षणं मर्षय । उपरि तावद्विलोकयावः ।

( पुनर्नेपथ्ये )

अस्मद्दोर्दण्डखेलद्दृढतरवरकोदण्डनिर्यन्निर्यत्
काण्डैरुद्दण्डविद्विण्मदकरटिघटाखण्डनेऽतिप्रचण्डैः ।
भिन्नस्साकं विदर्भ दुहितुपरमयाऽनुकूसिन्धुभिर्बन्धुभिस्त्वं
पश्येदानीं पटुत्वं न इह किमधुना यन्त्रसंवेधनेन ॥ ७९ ॥

किंच —

किं वा नो जरठेन चाद्य भवताऽशक्तेन युद्ध्वा यशो
यो मत्तो झषयन्त्रवेधक इति प्राप्ता प्रिया चेत्यलम् ।
आत्मानं कृतकृत्यमेव नितरां सम्मन्यतेऽस्मानिमान्
औद्धत्येन विलोकयन् रघुवटुश्शास्यस्स एवाधुना ॥ ८० ॥

रघुः — अधमो जायते नृपवर्गः ।

विदर्भ० — (श्रुतिमभिनीय) अहो धनुष्टङ्कारः श्रूयते । युद्धमुपक्रान्तं राजवर्गेण । तदिदानीं नोपेक्षणीयोऽयम् । (इत्युत्थातुमिच्छति ।)

नारदः — महाराज, न युक्तं भवद्गमनम् । प्रेष्यतामयं रघुनन्दनः ।

विदर्भ० — बालः खल्वयम् ।

नारदः — अत एव हि विशेषः । (रघुनन्दनं प्रति) वत्स इतस्तावत् ।

रघुन० — इतोऽहम् । (इति सत्वरमुत्तिष्ठन्) आर्य अहमेव समस्तानपि प्रमत्तान् नृपान् क्षणेनैव निवारयामि । (इति सास्त्रः शरासनं निष्फारयन्नेव निष्क्रान्तः ।)

विदर्भ० — (विलोक्य, साश्चर्यम्)

वत्सस्योदग्रचापादविरलविगलत्तीक्ष्णशल्येषुजाल-
प्रोद्भिन्नानेकयोधावयवविगलितासृग्वसामांसखण्डान् ।
खात्वा खात्वा च दृप्यत्कटुरटितशिवाकाककङ्काकुलेऽस्मिन्
युद्धे योद्ध्वा क्षितीशाः क्षणमतिबलिनानेन सर्वेऽपि भिन्नाः ॥ ८१ ॥

नारदः — (विलोक्य) अयं हि—

पुनरपि बहुरोषादेत्य कुर्वन्तमेतं
भृशमपि खलु शस्त्राशस्त्रि युद्धं मदान्धम् ।
नृपगणमिह मथ्नन् मोहनास्त्रेण वत्सः
पटुमतिरतिवेगान्मोहयित्वाऽभ्युपैति ॥ ८२ ॥

(प्रविश्य)

रघुन० — दिष्ट्या ते पराजिताः ।

रघुः — वत्स, इत एहि ।

रघुन० — (तातसमीपमुपसर्पति ।)

रघुः — (सप्रणयं गाढमालिङ्ग्य, हस्तेन तदङ्गमभिस्पृशति ।)

वसिष्ठनारदौ — वत्स दिष्ट्या शत्रुजयेन वर्धसे ।

विदर्भराजः — अस्मत्सुतापूर्वपुण्यफलरूप रघूद्वह ।
धैर्यवीर्यनिधे विद्वन्निदमासनमास्यताम् ॥ ८३ ॥

(इत्यासनं ददत्, प्रतीहारिणं प्रति)

भद्रसेन, मद्वचनादुच्यतामस्मत्सचिवः —

"वत्सोद्वाहकृते परं वितनुतामत्यद्भुतं मण्डपं
सर्वत्रास्तु च पूगगुच्छकदलीस्तम्भादिभिश्शोभितम् ।
मद्गेहं शुभवाद्यघोषितमिदं विज्ञाप्यतां सत्वरं
बन्ध्वोघस्सकलद्विजातिविदुषामोघश्च संपूज्यताम् ॥ ८४ ॥"

इति ।

प्रती० — यद्देव आज्ञापयति ।

(इति निष्क्रम्य पुनः प्रविश्य)

देव सचिवो विज्ञापयति, सर्वं सन्नद्धमेवेति ।

विदर्भ० — (कलावतीं प्रति) अयि, वत्सा मे शीघ्रमलंक्रियताम् ।

कला० — यद्रोचते कार्यम् ।

विदर्भ० — (वसिष्ठमवलोकयति)

वसिष्ठः — रघुमहीपाल, क्रियतां वत्सस्य गोदानमङ्गलम् । तत्र तावत्सम्मान्यन्तां ब्राह्मणाः ।

रघुः — तथा (इति पुत्रेण सह निष्क्रम्य पुनः प्रविश्य) निर्वृत्तमिदानीं गोदानमङ्गलम् । अद्यतु —

ये ये द्विजाश्चाश्रितदक्षिणाशा-
स्स्युस्ते स्वकृत्येषु रता निकामम् ।
समस्तविद्याकुशलाश्च सर्वे-
ऽप्यायान्तु कामं क्रियते सपर्या ॥ ८५ ॥

(नेपथ्ये)

रे रे किं मामवमन्यसे ? मूर्खस्त्वमेव किमपि न जानासि ।

सर्वे — (श्रुत्वा) विदुषां कलह इवाभाति ।

(पुनर्नेपथ्ये)

महाराज दीर्घायुर्भव । बहुदिनमारभ्य वयं भवत्कल्याणं प्रतीक्ष्य वर्तामहे ।

वसिष्ठः — सामान्यब्राह्मणानामयमालापः ।

(प्रविश्य)

प्रती० — देव, इतो बहिर्ब्राह्मणास्तिष्ठन्ति ।

रघुन० — प्रवेशयास्माकमनुग्रहाय त्वरितम् ।

प्रती० — तथा । (इति निष्क्रम्य पुनः प्रविश्य) महाराज, आगच्छन्ति ब्राह्मणाः ।

सूत्र० — ततः स्वस्तिवाचनाय बहवो विविधा ब्राह्मणाः प्रविशन्ति ।

दरु ।

विप्रसङ्घ एति विविधविषयतो दया-
सुप्रसन्नभूपसदसि — सुतरां त्वरया ॥

वेदविच्च विविधशास्त्रवेत्तापि परं
वादाय च मतिमान् स्तुतिवाक् च सादरं ॥
मलिनधीश्च डाम्भिकोऽपि मन्द ईर्ष्यया
कलितहृच्च कोपनोऽपि काञ्चनाशया ॥ १ ॥

सर्वे — ( राजानमुपसृत्य ) विजयतां महाराजः ।

रघुः — ( साञ्जलिबन्धम् ) उपविशन्तु भवन्तस्सर्वेऽपि ब्राह्मणाः ।

( सत्वरमन्योन्यघट्टितजानूरुजघनमुपविशन्ति । )

( तार्किकौ विवदतः । )

एकः — मूढ किमुच्यते 'किमपि न जानासि' इति ? अहं औत्तरः खलु । त्वमेव अज्ञो भवितुमर्हसि, दक्षिणाशाश्रयत्वात् ।

द्वितीयः — रे रे विज्ञंमन्य, त्वयि च दक्षिणेच्छायास्सत्त्वाद् व्यभिचारः ।

एकः — अये मूर्ख, च्छलेन मयि व्यभिचारमारोपयसि । तव प्रकृतिरसाधुरेव । अतस्त्वयि प्रत्ययो नास्ति ।

रघुः — अये कोऽयमलीकपण्डितः प्रकृतिरसाधुः प्रत्ययो नास्तीति ।

वसिष्ठः — राजन्, अयं तु वैयाकरणः । साधुप्रकृतिप्रत्यया बहवस्सन्ति ।

द्वितीयः — रे रे मूढ, कथं तावदेतेषां सत्त्वं ब्रह्मभिन्नस्यासत्त्वात् ।

वसिष्ठः — अयं तावदद्वैती ।

रघुः — ( सहर्षाश्चर्यम् ) शास्त्रप्रसङ्ग ईदृशः । ( इति तान् यथोचितं संमानयति । )

विद्वांसः — ( साशीर्वादं प्रतिगृह्णन्ति । )

ईर्ष्यालुः — सदाचारसंपन्ने मयि, कथमेते दुष्प्रतिग्रहकर्तारः शठाः पापिनः सम्मानमर्हन्ति ।

डाम्भिकः — रे कस्त्वं मूढ सदाचारसंपन्न इति वदसि ? शृणु तावत् —

स्नाने च सन्ध्याजपहोमपूजा-
स्वाध्याय एवापि च वैश्वदेवे ।
आतिथ्यकृत्येऽपि च सत्कथायां
को वा मदन्यो निरतोऽत्र लोके ॥ ८६ ॥

अहंकारी — अये कथं नाम तव सत्कृत्यनिरतत्वम् ? त्वं खलः खलु । तथा हि —

अस्नात एव तटिनीमुपगम्य भस्म-
लिप्तो जपन्निव निगृह्य करेण नासाम् ।
ध्यायन् परस्वहृतिरन्ध्रमतस्तु पूजां
सन्मण्डले सति करोष्यतिडम्भतस्त्वम् ॥ ८७ ॥

डाम्भिकः — छिङ् मूर्ख! अपसर ते स्वेदकणा मदङ्गानि दूष्येरन् ।

अहं० — अये! किं मां प्रेष्यमिव अपसरेति धिक्करोषि ?

डाम्भिकः — कस्सन्देहः ?

अहं० — शृणु रे मूढ, पत्तने तक्रादिविक्रयणाय भार्यया प्रेषितोऽप्यहं तद्वचनं न श्रुतवान् ।

डाम्भिकः — (सोपहासम्) किं तद्वचनमपि न श्रुतम् । तर्हि त्वं पौरुषवानेव ।

अहं० — नो चेत्त्वमिवाहमपि स्त्रीजितः किम् ?

डाम्भिकः — किं मां सभायामपहससि, अनेन त्वां प्रहरिष्ये (इत्यासनं सक्रोधं गृह्णाति ।)

अहं० — (सरोषम्) मूर्ख, किमोजायसे । न त्वां मुञ्चामि । (इति यज्ञोपवीतं कण्ठ आवेष्ट्य शिखां दृढं बध्नाति ।)

वसिष्ठः — किमत्रापि जातिचापल्येन मुधा कलहमातन्वाथे । (इति तौ निवार्य रघुमुखमालोकयति ।)

रघुः — (तावपि यथोचितं मानयति ।)

मूर्खः — अहो अर्थान्धता! अर्थाशातस्तुतिपरनिन्दारहितमपि मां न सम्मानयत्येषः ।

सर्वे — (हसन्ति)

रघुः — महाब्राह्मण, इदं तावद्धनबन्धनम् वोढुं शक्तिरस्ति चेद्गृहीत्वा गम्यताम् ।

मूर्खः — (सहर्षत्वरम्, धनबन्धनमुपसृत्य हस्ताभ्यां चालयति ।) अहो न चलत्येतत् । (परितो विलोक्य) कोऽत्र भोः ।

रघुः — ब्रह्मन् सहायेन न विभाव्यम् ।

मूर्खः — किं कर्तव्यम् । (इति यथाशक्ति विलोड्य उत्तरीयेण तदावेष्ट्य स्वकटिदेशे निबद्ध्य तत्पृष्ठतः कृत्वा किंचिदवनम्य बलात्कर्षति ।)

कोपनः — (सत्वरमुपसृत्य) हे अनड्वन्, कर्षय कर्षय । (इति सूचीकलिताग्रेण दण्डेन तज्जघनदेशमाविद्ध्यति ।)

( सर्वेऽपि हसन्ति । )

**मूर्खः** — कस्त्वं मां बाधसे ?

**कोपनः** — मूर्ख, कस्मात्तवेदं धनं ? का वा विद्या त्वयेदानीं प्रकटीकृता ? (इति कर्षति सोऽपि कर्षति । एवमन्योन्यं विवदतः । )

**रघुः** — मास्तु विवादः । युवयोरेवास्त्वेतत् ।

**उभौ** — ( सहर्षं राजानमभिनन्द्य गृह्णीतः )

**चपलः** — महाराज, महाराज, ( इति रघुमभिधावति । )

**रघुः** — इतस्तावत् कश्चित् पदस्खलनमप्यविगणयन्नेव त्वरितमुपसर्पति ।

**वसिष्ठः** — ( विलोक्य ) अहो चापल्यमस्य । एनं तावत्पृच्छामि । ब्राह्मण कस्त्वम् ?

**ब्राह्मणः** — चपलोऽहं नाम्ना ।

**वसिष्ठः** — कृत्यतश्चापि तथैव । भोः कुत्र तावद्गच्छसि ?

**ब्राह्मणः** — ( सनिश्वासं प्रचलन्नेव ) कुत्र तावद्दाता स रघुराजः ? ( इत्यालोलनयनं सर्वत्र पश्यति । )

**रघुः** — ( सस्मितम् ) ब्राह्मण इत इतः ।

**ब्राह्मणः** — ( हस्तावुन्नमय्य ) विजयतां महाराजः ।

**रघुः** — ( अञ्जलिं कृत्वा ) ब्रह्मन्, किमर्थमियान् संरम्भः ? ( इति तत्पादयोः स्खलनजनितव्रणं निर्दिश्य ) किमेतत् ? ( इति पृच्छति । )

**ब्राह्मणः** — ( सचमत्कारम् )

आशा दरिद्रता चोभे मम भार्ये पतिव्रते ।
तत्राद्या चतुरा चैतत् तच्छृङ्गारविचेष्टितम् ॥ ८८ ॥

**सर्वेऽपि** — सम्यगाह । ( इति श्लाघयन्ति । )

**रघुः** — साधु ! साधु ! ( इति प्रशस्य तस्मै तद्वहनपरिमितं धनं ददाति । )

**चपलः** — विजयी भव महाराज । ( इति सत्वरं प्रतिगृह्य विदर्भराजं निर्दिश्य वसिष्ठं प्रति ) किमयमेव विदर्भराजः ? ( इति पृच्छति । )

**वसिष्ठः** — अथ किम् ।

**चपलः** — (विदर्भमुपसृत्य) विजयतां महाराजः (इत्युक्त्वा) मम ... मम ... (इति दन्तान् बहिर्दर्शयति)

**विदर्भराजः** — ब्रह्मन्, किमपेक्षसे ?

ब्राह्मणः — पृथिवीकामुकोऽस्मि ।

विदर्भ० — (सस्मितम्) आशाकामुकस्य पृथिवीकामुकत्वे को विशेषः? कियत्पृथिवीभागानपेक्षसे?

ब्राह्मणः — मया प्रक्षिप्तोऽयं हस्तदण्डः यत्र पतति तावदवधिकान् ।

विदर्भ० — तर्हि प्रक्षिपैनम् ।

चपलः — (कट्यामुत्तरीयं दृढं बद्ध्वा वेगेन दण्डं प्रक्षिपति ।)

सर्वे — (विलोक्य) अहो चापल्यानुसारिणी बलवत्ता च ब्राह्मणस्य, यदयं दण्डः क्रोशाधिके देशे पतितः ।

विदर्भ० — (सहर्षम्) ब्रह्मन्, तावदवधि भूभागान् प्रतिगृह्णातु भवान् । (इति तस्य हस्ते उदकधारां मुञ्चति ।)

चपलः — (प्रतिगृह्णाति)

वसिष्ठः — अतिक्रामति मुहूर्तः ।

रघुः — (सर्वानागन्तुकब्राह्मणान् यथोचितं संभाव्य संज्ञापयति ।)

ब्राह्मणाः — स्वस्ति वोऽस्तु । (इति निष्क्रान्ताः ।)

कलावती — (विदर्भराजं प्रति) तात, अलंकृता मम सखी ।

विदर्भ० — तर्हि शीघ्रमानीयतां वत्सा ।

कला० — (इन्दुमतीं राज्ञस्समीपमानयति ।)

विदर्भ० — (इन्दुमतीं प्रति) वत्से इत एहि ।

इन्दु० — (पितृसमीपमुपसरति ।)

रघुन० — (अपवार्य) वयस्य, एषा प्रिया ।

मृदुतरमनोज्ञगत्या चरणलसन्नूपुरारवेणापि ।
जितकूजत्कलहंसा भातीयं तातपार्श्वमायान्ती ॥ ८९ ॥

(इति सस्नेहं पश्यति ।)

विदर्भ० — (इन्दुमतीं प्रति) वत्से इतो ममांक उपविश ।

इन्दु० — (तथा करोति ।)

विदर्भ० — (वसिष्ठं पश्यति ।)

७

वसिष्ठः — वत्स रघुनन्दन, इत इतः ।

रघुन० — (विदर्भराजसमीपे तिष्ठति ।)

विदर्भ० — (मनोज्ञतरवस्त्रभूषणाद्यैः रघुनन्दनं भूषयन् नारदमवलोकयति ।)

नारदः — राजन्, त्वरस्व तावत् ।

विदर्भ० — (प्रतीहारिणं प्रति) भद्रसेन, वाद्यकारास्त्वरितं मङ्गलवाद्यानि वादयन्तु ।

प्रतीहारी — तथा। (इति वाद्यकारानाज्ञापयति)

नारदः — (दिवि विलोक्य, सहर्षम्)

अत्रोल्लसन्मङ्गलवाद्यघोषं श्रुत्वा परं व्योम्नि सुरास्सहर्षम् ।
आरब्धतौर्यत्रिकमादरेण कामं वितन्वन्ति हि पुष्पवर्षम् ॥ ९० ॥

वसिष्ठः — महाराज शुभोऽयं मुहूर्तः ।

विदर्भ० — (सप्रेमानन्दं, रघुनन्दनं प्रति)

इनकुलतिलक श्रीमन् रघुनन्दन पाणिनाद्य शुभचरिताम् ।
हस्ते गृहाण सुमुखीमेनां सहधर्मचारिणीं दयिताम् ॥ ९१ ॥

रघुः — (सहर्षं दयितां हस्ते गृह्णाति ।)

सर्वे — (सन्तोषातिशयं नाटयन्ति ।)

रघुः — सञ्जातकल्याणो मे वत्सः ।

वसिष्ठः — (साशीर्वादम्)

स्कन्देनाङ्कगतेन वीक्ष्य मकरीपत्रं कपोले रहः
सक्तं क्रीडितुमेष तात मकरो मे दीयतामित्यलम् ।
पृष्टश्शैलभुवः पुरस्तु कृपया तस्या मुखं सस्मितं
पश्यन् वां स शिवो विवाहसमये कुर्यात्सदा मङ्गलम् ॥ ९२ ॥

यो मेरौ धरणीधरेन्द्रतनयागात्रार्धपूर्णाङ्गको
गङ्गातुङ्गतरङ्गसङ्गतजटाजूटोल्लसन्मस्तकः ।
भक्तस्तोममनोविनोदनपरोऽपारो वरोऽत्रातुलं
कल्याणे युवयोर्विभुस्स तनुतां शम्भुस्सदा मङ्गलम् ॥ ९३ ॥

किं च —

याऽपास्तानमदार्तिरत्र सुमनश्चापागमप्रक्रिया-
रूपात्यद्भुतकेलिरुद्यतकृपाकूपारमूर्तिः क्रियात् ।
साऽपारोज्ज्वलवैभवा मलयजालेपाक्तवक्षोरुहा
श्रीपार्वत्यधुनेन्दुमत्यजमहाभूपालयोर्मङ्गलम् ॥ ९४ ॥

दुर्वारातुलदैत्यमण्डलमहागर्वापहारोज्ज्वल-
न्निर्वाहा सततं तनोतु महिता खर्वातुलप्राभवा ।
पर्वातिस्फुरदिन्दुमण्डलमुखी स्वर्वासिभिर्वन्दिता
शर्वाणीन्दुमतीवराजनृपयोस्सर्वार्थदा मङ्गलम् ॥ ९५ ॥

नारदः —

कल्याणाम्बरभूषितो वरतपःकल्यात्मवित्तापमा-
वन्याराधितपद्द्वयो नतमनश्शल्यापहारोद्यतः ।
वल्यादिप्रबलारिखण्डनपरः कल्यार्तिहारी हरिः
कल्याणे त्वनयोस्तनोत्विह सदाऽतुल्यार्थकृन्मङ्गलम् ॥ ९६ ॥

कामापूरणतत्परः प्रणमतां कामायुतप्रोल्लस-
द्धामाऽयं भुवनावनोऽतुलमहद्भूमा हरिस्सादरम् ।
सामादिश्रुतिसन्नुतोऽत्र सुमनस्तोमार्चिताङ्घ्रिः क्रियात्
श्रीमानिन्दुमतीविवाहसमये क्षेमावहो मङ्गलम् ॥ ९८ ॥

श्रीमद्विष्णुहृदब्जमध्यनिलया सौभाग्यदोद्यत्कृपा-
पीयूषौघतरङ्गसङ्गकलितापाङ्गोज्ज्वला सादरम् ।
इन्द्रादित्रिदशार्चितातुलपदद्वन्द्वा सहर्षं क्रिया-
ल्लक्ष्मीस्सन्ततमिन्दुमत्यजमहीपालोत्सवे मङ्गलम् ॥ ९९ ॥

लीलोत्पादितभक्तसंपदतुलो नीलोत्पलौघप्रभा
मूलोन्मूलनतत्परो विजयते यो लोकमातुः परम् ।
लोलापाङ्ग इहातितोषितमहज्जालोऽद्य कुर्यात्कृपा-
शीलो भूरि स इन्दुमत्यजमहीपालोत्सवे मङ्गलम् ॥ १०० ॥

नारदः — अहो यथाविधि निर्वर्तितकल्याणोऽयं विदर्भराजः । वत्स रघुनन्दन, किं ते भूयः प्रियमुपहरामि ?

रघु० —

त्वन्मन्त्रप्रवरेण तु क्षितिभृतामत्राभिचारादहं
जातः किं च नृपाश्च तेऽपि कुधियः कामं मया निर्जिताः ।
ऊढा चेन्दुमती प्रियेयमधुना भोस्त्वत्प्रसादान्मुने
किं वान्यन्नितरां ममास्ति भगवन् संप्रार्थनीयं प्रियम् ॥ १०१ ॥

सूत्रधारः —

राजानो धरणीं सुनीतिनिरता रक्षन्तु विद्वज्जना
लाल्यन्तां सरसोक्तयश्च कवयोऽप्येतै रसज्ञैर्नृपैः ।
वर्णाश्चाप्यखिलाः स्वधर्मनिरताः कामं भवन्त्वन्वहं
स्यादेतस्य कवेरितोऽतिविभवस्सत्पुत्रलाभो यशः ॥ १०२ ॥

(इति निष्क्रान्तास्सर्वे ।)

हरिः ओम् । शुभमस्तु ।

---

In the colophon at the end of the play, the Ms. has the following lines :—

कीलकवर्षे ते मा० पुष्यबध त्रयोदशी
घोरस्वामिकविकृत इन्दुमतीपरिणयनाटकं ॥

